॥ श्रीः ॥

जयपुर-राजकीय-विद्वन्मण्डलसभाप्रधानपण्डितेन
महामहोपदेशकेन समीक्षाचक्रवर्त्ति-मैथिल-
श्रीमधुसूदनशर्म्मणा विद्यावाचस्पतिना
प्रणीते वेदोक्त-द्वादशवादात्मक-
विज्ञानमार्गप्रकाशके

## ब्रह्मविज्ञान-शास्त्रे

अन्यतम-विज्ञानमार्गरूपोऽयम्-

# अहोरात्रवादः

ब्रह्मविज्ञानशास्त्रसंबन्धिनो द्वादश विज्ञानवादा
नामतो निर्दिश्यन्ते—

१-विज्ञानेतिवृत्तवादः, २-सदसद्वादः, ३-रजोवादः, ४-व्योमवादः,
५-अपरवादः, ६-आवरणवादः, ७-अम्भोवादः, ८-अमृतमृत्युवादः,
९-अहोरात्रवादः, १०-दैववादः, ११-संशयवादः, १२-सिद्धान्तवादः।

सोऽयमहोरात्रवादो नामग्रन्थः लखनऊविश्वविद्यालयसंस्कृताध्यापकेन
श्रीमता आद्यादत्तठक्कुरेण महता परिश्रमेण संशोध्य, केसरीदाससेठ-
प्रबन्धेन, लखनऊनगरे नवलकिशोरप्रेसनाम्नि मुद्रणयन्त्रालये
मुद्रयित्वा प्रकाशितः।

प्रथमावृत्तिः ] [ सन् १९२९ ई०

## सम्पादकस्य वक्तव्यम् ।

श्रीमन्महर्षिवंशप्रसूतानां सत्र भवतामार्याणामक्षयः परमो निधिर्भगवान् वेदः सर्वविधानां जगति विद्योतमानानां विज्ञानानामादिः प्रसव आकरायित इति नैष कस्यापि संशयास्पदमर्थः । वेदोऽयं जगति सर्वप्रथमं वाङ्मयम्, एतदुपज्ञमेव जगति विज्ञानानां प्रसार इति वैदेशिका अपि मन्यन्ते, परं विज्ञानप्रधानायामस्यां शताब्द्यामपि सन्तीदृशानि शतशो विज्ञानानि, यानि वेदैकशरणैरेव प्राप्याणि, नाधुनापि वैज्ञानिकानामर्वाग्दृशां परिचयं गतानि । तेषां यदि भवेदाधुनिकीं रीतिमवलम्ब्य प्रकाशः, नूनं विज्ञानसंसारे परिवर्त्तितं युगान्तरमेव प्रादुर्भवेत्, बहवोऽभिनवाः सिद्धान्ताः स्थिरीभवेयुः, बहूनामद्यापि सन्दिग्धानां विषयाणां विनिर्णयः स्यात्, बहवश्च भ्रान्ताः सिद्धान्ताः सत्यसरणिं प्रविष्टाः स्युरित्यस्माकं वैदिकप्रमाणानां हिन्दूजातीयानां विश्वासः । विशेषेणाध्यात्मिकास्तु विषया वैदिकमेवाध्वानमवलम्ब्य शक्या विनिश्चयेन विज्ञातुम्, तत्र 'नान्यः पन्थाविद्यते अयनाय' । तद्वैदेशिकैरपि वेदेभ्यो बह्वस्ति शिक्षणीय मित्यस्ति वेदस्य किमपि पारेगिरं गौरवम् ।

परं हन्त ! तदिदानीं केवलं वाचिकमेव । दैवप्रातिकूल्याद्वा वेदपरिपन्थिनां बौद्धयवनादीनां प्रबलतराद्आक्रमणाद्वा, हतभागधेयानामस्माकमालस्योपेक्षादिदोषनिवहाद्वा परः सहस्रेभ्यो वत्सरेभ्यो वैदिकं विज्ञानं विलुप्तप्रायमभवत् ।

'वेदाद्धर्मो हि निर्बभौ'

'वेद एव द्विजातीनां निःश्रेयसकरः परः'

इत्यादिभिर्वचननिवहैस्तत्र भवद्भिर्मनुयाज्ञवल्क्यप्रभृतिभिर्भूरिभूरि समुद्घुष्टमाहात्म्यस्य वेदस्य द्विजातिमन्येषु कथापि नेदानीं श्रूयते । येऽप्यस्मासु 'वैदिकाः' इति प्रथिताः, तेऽपि केवलं वेदाक्षरभारभाजः, न तु वेदार्थविदः, दूरे तु वैदिकविज्ञानस्पर्शकथा । उच्छिन्ने हि गुरुपरम्परासंप्रदाये न सुलभमिदानीं वैदिकविज्ञानम् । यानि त्वद्य समुपलभ्यन्ते वेदानामाचार्यप्रणीतानि भाष्याणि, तान्यपि समुच्छिन्नवेदसंप्रदाये विलुप्तविज्ञाने काले प्रादुर्भूतानीति नालं भवन्ति कार्त्स्न्येन वैदिकविज्ञानविकासनाय । यानि चास्यामेव शताब्द्यामभिनवानि भाष्यटीकाटिप्पणलेखादीनि वेदानां प्रादुर्भूतानि, भवन्ति च, तान्यपि केवलं सामाजिकरीतिनीतिप्रवणया दृशा वेदस्याङ्गान्युपाङ्गानि च सर्वथा समुपेक्ष्य निर्मितानि, निर्मीयन्ते चेति न ततोऽपि यथार्थवैदिकविज्ञानप्राप्तिप्रत्याशा । अन्वेषणप्रधाने हि युगेऽस्मिन् यावदामूलचूडं परिभाषास्फोटनपुरस्सरम्, उपक्रमोपसंहारप्रकरणसंगतिसनाथम्, इतिहासपुराणाङ्गोपाङ्गसाहाय्येन बहुशाखाभिन्नं संहिताब्राह्मणात्मकं भागद्वयमपि वेदस्य सम्यगालोड्य विज्ञानसरणिर्नाविष्क्रियेत, न तावद्यथाभूतवेदार्थविज्ञान-

संभावना। न च विदुषां विषयेऽस्मिन् दृश्यते प्रवृत्तिः। अन्वेषणस्य तु देशेऽस्माकमियं दशा, यदत्र वेदैकजीविते भारते दौर्लभ्यं गतानि वेदशाखा-ब्राह्मण-श्रौतसूत्रादिपुस्तकानि युरोपीयैरन्विष्यान्विष्य प्रकाश्यन्ते, भारतीयास्तु विद्वांसस्तत्र निर्व्यापारा इत्यहो लज्जास्पदम्। युरोपीयास्तु विद्वांसो यद्यपि वैदिकेष्वपि विषयेषु तत्र तत्रान्वेषणरताः सन्ति, परमस्मदपेक्षया विभिन्ना तेषां दृष्टिः, न च वैदिकविज्ञानान्वेषणसाधनानि तत्र सुलभानि, परम्पराभावात्, सभ्यताभेदाच्च। नह्यपरिचितवैदिकसभ्यताविज्ञानादिविषयो वैदेशिकैस्तथा सम्यगन्वेष्टुं सुशको यथा तद्देशवासिभिः। अस्ति च तत्र बहूनां सुदृढो विश्वासो यद्वैदिके काले विज्ञानस्य तादृशं गाम्भीर्यं नासीदेवेति। तद्विश्वासवशंवदाश्च ते न गम्भीरं विज्ञानं वेदेषु गवेषयितुं पारयन्ति। नचावश्यविधेयेऽस्मिन् वैदिकविज्ञानान्वेषणकार्ये भारतीयानां धनिकानां दृष्टिः, नापि च विदुषामिति दैवमेवावलम्बमानाः सीदन्तिस्म जिज्ञासवो जनाः।

इदानीं सहर्षमिदमावेदयितुं प्रस्तुताः स्मो यद्भगवतो वेदपुरुषस्य जगन्निर्मातुर्जगदीश्वरस्यानुग्रहेण, तत्प्रेरणया भारते वर्षे एवाभावस्यास्य निराकरणं प्रस्तुतम्। जयपुरराजसभाप्रधानपण्डितैर्वाचस्पतिबुद्धिविभवैरप्रतिमप्रतिभैर्मैथिलकुलालङ्कारैर्विद्यावाचस्पतिश्रीमधुसूदनशर्ममहोदयैर्यावदायुर्वेदवेदाङ्गेषु परिश्रम्य वैदिकविज्ञानान्वेषणस्य सुपरिष्कृतोऽध्वा सम्यगाविष्कृतः। इतः परःसहस्रेषु संवत्सरेषु विलुप्तस्यास्य नवीभूतस्याध्वन आविष्कारो नूनं परं सौभाग्यम्। अयं चाध्वा ब्राह्मणालोडनमूलक इतिहासपुराणपरिष्कृतोऽङ्गोपाङ्गसाहाय्यप्रधान इति नात्र कस्यापि गतिक्लेशो न वा विप्रतिपत्तिरप्युदेतुमर्हा। प्राप्तेऽस्याध्वनः परिचये नूनं विद्वांसः समादरेणात्र प्रचलितुमुत्सुकाः स्युः, तेन च क्रमेणाधिकाधिकं प्रसरति वैदिके विज्ञाने जनतायाः सौभाग्यसूर्योदयो नातिविदूरः स्यात्।

त्रयो हि विषयाः प्राधान्येन वेदेषु विजृम्भन्ते—यज्ञः—इतिहासः, विज्ञानं चेति। तत्र यज्ञानां सरहस्यं कार्त्स्न्येन निरूपणाय ग्रन्थकृतानेन 'यज्ञमधुसूदनो' नाम ग्रन्थः पृथङ्निबद्धः, इतिहासस्यामूलचूडं निरूपणाय च देवासुरख्यात्यादयः पञ्च ख्यातय उपनिबद्धाः। अथ विज्ञानरहस्यप्रकाशनाय तु 'ब्रह्मविज्ञानशास्त्र' नामा महाग्रन्थोऽयं पद्यमयो विरचितः। तत्तदङ्गोपाङ्गादिरहस्यख्यापनाय सन्त्यन्येऽपि बहवो निबन्धा महानिबन्धाश्च ग्रन्थकृतानेन निबद्धाः, परं विस्तरभयान्न सर्वेऽत्र प्रस्तूयन्ते।

यद्यपि—

'मोक्षे धीर्ज्ञानमन्यत्र विज्ञानं शिल्पशास्त्रयोः'

इति वदतामरसिंहेनाध्यात्मिकातिरिक्तं भौतिकं ज्ञानमेव विज्ञानशब्दार्थतयाभ्युपगतम्, लोकव्यवहारोऽपि चेदानीन्तनः प्रायेण तदनुसारी, साइन्स पदाभिधेये पदार्थशास्त्र एव विज्ञानशब्दस्येदानीन्तनैः प्रयुज्यमानत्वात्, तेन च ब्रह्मविषये विज्ञानपदमसमञ्जसमिवापाततः प्रतीयते, परं वस्तु गत्या विचारे

प्रस्तुते-विज्ञानशब्दस्य न तादृशेऽर्थे शक्तिः प्रामाणिकी भवितुमर्हति। विज्ञानं हि नाम विशिष्य ज्ञानम्। तथा च यत्र शब्दज्ञानादिना वस्तुतः सामान्येन प्रतिभासः, तत्केवलं ज्ञानम्, यत्र तु प्रत्यक्ष इवाशेषविशेषप्रतिभासः, तद्विज्ञानम्। ज्ञानं हि परोक्ष इव प्रतिभासः, विज्ञानं तु अनुभवावसानः प्रत्यक्ष इव प्रतिभासः।

अस्मिन्नेवार्थे—

'ज्ञानं तेऽहं सविज्ञानमिदं वक्ष्याम्यशेषतः' ( अ० ७।२ )
ज्ञानं विज्ञानसहितं यज्ज्ञात्वा मोक्ष्यसेऽशुभात्' ( अ० ९।१ )

इत्यादि भगवद्गीतासु विज्ञानशब्दः प्रयुक्तः, न हि तत्र शिल्पशास्त्रयोरस्ति कश्चित्प्रसङ्गः, भाष्यकारैश्च श्रीशङ्कराचार्यप्रभृतिभिस्तत्र 'विज्ञानसहितम् स्वानुभवसंयुक्तम्' इत्येव व्याख्यातम्। तथा च 'ब्रह्मविज्ञानम्' इति नाम्नि ग्रन्थकृतोऽयमाशयः, यदाधुनिकेषु दर्शनेष्विव न ब्रह्म केवलं वाङ्मात्रेण परोक्षतया वेदेषु व्याख्यायते-अपि तु वैज्ञानिकीं ( साइण्टिफिक Scientific ) रीतिमवलम्ब्य तथा प्रत्यक्षमिव प्रदर्श्यते-यथा करतलामलकवत् प्रस्फुटस्तस्यानुभवः स्यात्। तथैव ग्रन्थेऽस्मिन् यत्तत्त्वनिरूपणम्-तद्वैज्ञानिक्यैव रीत्या, नत्वाधुनिकदर्शनरीत्या। अयमेव ग्रन्थस्यास्यातिशयो जागर्ति, देशकालानुरूपता च प्रस्फुटमत्र पाठकैरनुभूयेत।

यथा ह्याधुनातनेषु दर्शनेष्वात्मादिसम्बन्धे षोढा प्रवादाः श्रूयन्ते, तत एव च षड्दर्शनानि प्रसिद्ध्यन्ति, एषां च दर्शनानां समन्वयेन मुख्यः सर्वदर्शनसिद्धान्तो विचारशीलैरधिगन्तुं सुशकः, तथैव पुरा वैदिके युगे दश प्रवादाः पृथक् प्रस्थानाः प्रचलिता आसन्निति पृथग्विधतन्निरूपणदर्शनेनानुमीयते। त एव दश प्रवादाः पृथगवबुध्यमानाः पूर्वपक्षभूताः, एषां समन्वयेन तु मुख्यो वैदिकः सिद्धान्तस्तत्प्रवेशिप्रतिभैरासाद्यते। ते चेमे दश वादा ऋक्संहितायां नासदीये सूक्ते ( मण्डल १० सू० १२९ ) समुद्दिष्टाः—

नासदासीन्नो सदासीत्तदानीं नासीद्रजो न व्योमाऽपरो यत्।
किमावरीवः कुह कस्य शर्मन्नम्भः किमासीद्गहनं गभीरम्॥
न मृत्युरासीदमृतं न तर्हि न रात्र्या अह्न आसीत्प्रकेतः।
आनीदवातं स्वधया तदेकं तस्माद्धान्यन्न परः किं च नास॥
को अद्धा वेद क इह प्रवोचत् कुत आजाता कुत इयं विसृष्टिः।
अर्वाग् देवा अस्य विसर्जनेऽनाथाः को वेद यत आबभूव॥

इह पृथग्भूतानां पूर्वपक्षरूपाणां वादानां निषेधरूपेणोल्लेखः कृतः मध्य एव च सिद्धान्तः "आनीदवातम्" इत्यादिना संक्षेपरूपेण निर्दिष्टः। अन्यत्र च संहितासु ब्राह्मणेषु च वादानामेषां विवरणं तत्र तत्र श्रूयते। एते दश वादा अस्मिन् 'ब्रह्मविज्ञानशास्त्र'-नामके महाग्रन्थे एकैकेन प्रकरणेन विवृताः। अन्ते च समन्वयरूपः

सिद्धान्तवादः प्रदर्शितः । एवं महाग्रन्थस्यास्य द्वादश प्रकरणानि, 'आदौ विज्ञानेतिवृत्तवादो' ग्रन्थस्योपोद्घातरूपः, तत्र कथमस्य विज्ञानस्यार्येषु प्रसार इति बोधयितुं देवासुरख्यातौ निरूपितस्येतिहासस्य संक्षेपः प्रदर्शितः, वैदिकविज्ञानावबोधस्य परिभाषा ऋषिदेवासुरादिभेदनिरूपणेन सम्यग् विवृता, दशानां वादानां स्वरूपमपि च सम्यग्दर्शितम्। तदनु दशभिः प्रकरणैर्दश वादाः, (उपरितने पृष्ठे निर्दिष्टाः) अन्ते च सिद्धान्तवादे करतलामलकवद्वैदिकरहस्यख्यापनम् । एवं विधस्यास्य महाग्रन्थस्य सकृदेव प्रकाशनं दुष्करमिति प्रकरणमेकैकं पृथक् ग्रन्थरूपेण मधुसूदनग्रन्थमालायां प्रकाशयितुं प्रक्रान्तम्—

तत्रोक्तपूर्वेषु दशसु वादेषु अष्टमोऽयम् 'अहोरात्रवादः,' तन्निरूपणात्मकं च ग्रन्थे ।

## 'अहोरात्रवादः'

इति नाम्ना प्रथितं नवमं प्रकरणमिदम् । इदं प्रकरणान्तरापेक्षया लघुभूतमिति गभीरमिति च सूचीकटाहन्यायेन स्थालीपुलाकन्यायेन वा पूर्वं प्रकाशितम् । अहोरात्रे एव जगतोऽस्य मूलम्, ताभ्यामेव जगत उत्पत्तिरिति वादस्यास्य निष्कर्षः । ते के इमे 'अहोरात्रे' इति जिज्ञासायां ग्रन्थेऽस्मिन् दशधा अहोरात्रशब्दार्थौ विवृतः । सर्वेषां चैषामहोरात्राणां यथा जगन्मूलत्वम् तथोपपादितम् । अध्यात्ममधिदैवतं च निविष्टानां विविधात्मनां स्वरूपविनिर्णयः, यज्ञस्वरूपप्रतिपादनम्, पृथिवीसूर्ययोः कः स्थिरः को वा चल इति वैदिकप्रमाणपुरस्सरं विवेचनम्, ऋतसत्यादिनिरूपणेनाघमर्षणसूक्तार्थरहस्यख्यापनम्, मन्वन्तरकल्पादिविवरणं चेति विविधा रोचका विचारा अत्रान्तर्भवन्ति । ग्रन्थमिमं सम्यग्विविच्य विद्वांसो यदि वैदिकं तत्त्वमस्माद् गृह्णीयुः तर्हि प्रकाशनप्रयासोऽयं सफलः स्यात् ।

यद्यपि आधुनिकानां विदुषां सर्वथा परोक्षभूता अभिनवेयं विज्ञानसरणिः, पद्येषु च निवेशिता दार्शनिका भावा विशेषेण दुरवबोधा भवन्तीत्यपि विदुषामनुभवसिद्धम्, तत्रापि च नायं ग्रन्थोपक्रमः अपि तु ग्रन्थमध्यस्थं प्रकरणमिदम्, न चात्र कश्चिदपि टीकाटिप्पण्यादिसंनिवेश इति सर्वोऽपि दुरवबोधतासामग्री संनिहितेह वर्तते, तेन च न साधारण्येन विदुषां रुचिकरोऽयं प्रयासः स्यादिति स्फुटं संभाव्यते । तथापि सुमहता कालेन घोरं परिश्रम्याविष्कृतस्यैवंविधस्याभिनवस्य विज्ञानस्य विशेषविदां पुरः स्थापनमतीवावश्यकमिति कर्त्तव्यबुद्ध्यैवाहमत्र कार्ये प्रवृत्तः । विज्ञानाभिरुचयो विद्वांसः सावधानमिमं ग्रन्थमालोच्य यदि गुणग्रहणस्वभावतया गुणानस्य गृह्णीयुः, उत्साहं च मे वर्द्धयेयुः—तर्हि प्रकरणान्तरभूतानि ग्रन्थान्तराण्यपि ग्रन्थमालायामस्यां समुपस्थापयेयम् । अनुगृह्णातु जगदीश्वरो विस्मृतवैदिकविज्ञानं भारतं वर्षं पुनर्वेदार्थप्रदानेनेति भूयो भूयः संप्रार्थ्य विरमति विस्तरभियेति—

श्रीआद्यादत्त ठक्कुरः ।

---



पुस्तकप्राप्तिस्थानम्—मेहरचन्दलक्ष्मणदासमहाशयाः लवपुरम्.

# अहोरात्रवादस्य

## शुद्धिपत्रम् ।

| | | अशुद्धिः | शुद्धिः |
|---|---|---|---|
| अनुक्रमणिका पृष्ठे—शुक्लकृष्णाधिकारः | श्लो॰ | २४ | २५ |
| द्यावापृथिव्यधिकारः | ,, | २१८ | २१९ |
| ऋतसत्याधिकारः | ,, | ७१ | ८९ |
| यज्ञाधिकारः | | ९५ | ९८ |
| उपसंहारः | ,, | ७०८ | ७२० |
| ... ... ... ... | | १२ | |
| ... ... ... ... | | ७२० | |

२ पृष्ठे—सूत्रसंख्या (५) सर्वेऽपि वर्णा—इति श्लोकात् पूर्वमयं श्लोको लेख्यः ।

धूम्रोऽतिनील-नीलौ—हरितः पीतः सुवर्ण-शोणौ च ॥
इति सप्त सन्ति योगजवर्णा अन्येऽपि योगतोऽनन्ताः ॥ १६ ॥

१४ पृष्ठे—सूत्रसंख्या १—अत्र "इत्थं महर्षिर्जमदग्नि"—इत्यस्य स्थाने 'गन्धर्व इत्थं जमदग्नि'—इति पाठः साधुः । एतच्छ्लोकानन्तरं तु अयमधिकः श्लोकः संनिवेश्यः—

नृचक्षा एष दिवो मध्यआस्तऽआ पप्रिवान् रोदसी अन्तरिक्षम् ।
स विश्वाचीरभिचष्टे घृताचीरन्तरा पूर्वमपरं च केतुम् । [१०।१३९।२]
विश्वावसुर्देवगन्धर्वः ॥

२६ पृष्ठे—सूत्रसंख्या २ "ऋतं च सत्यं च भवस्य"—इति श्लोकात् पूर्वमेते श्लोकाः षड् अधिकं संनिवेश्याः—

नाभिप्रधी यत्र विदुर्व्यवस्थितौ तत् सत्यमेतत् सशरीरमस्ति हि ॥
यच्चाशरीरं तदृतं न तत्र तौ नाभिप्रधी स्तो नियतौ, श्लथं च तत् ॥ १ ॥
सौम्यं मनः, प्राण उपैति सौमिको वाग्वायुतेजोजलभूमयः क्रमात् ॥
भूतानि सृष्टानि हि, तत्र दृश्यते सत्यर्तयोः शृङ्खलया निवेशनम् ॥ २ ॥
मनोऽथ वाक् तेज इमानि मण्डलात्मकं शरीरं दधते, वियान्ति च ॥
प्राणश्च वायुश्च जलं च सर्वतो विसारि भूतानि, मृदस्ति तु द्विधा ॥ ३ ॥
सोमे च वायौ च जले चिदन्वयस्तेनात्र जीवास्त्रिविधाः सचेतनाः ॥
अप्सुक्षितो मीनगणा, वयं पुनर्वायुक्षितः, सोमसदस्तु दैवताः ॥ ४ ॥
अद्धा तु पश्यामि जलेचरानिमानद्धातमां वायुचरांश्च चेतनान् ॥
देवांस्तु सांख्ये विदुरूर्ध्वतो भुवश्चन्द्रांशुगानष्टविधानभूधृतान् ॥ ५ ॥
ऋतेषु सोमादिषु सत्यसंस्थया सृष्टिः समग्रा भवतीति निश्चितम् ॥
रात्रीमृतं, सत्यमहः, प्रचक्षते सृष्टीरहोरात्रकृतास्ततो विदुः ॥ ६ ॥

२७ पृष्ठे—सूत्रसंख्या ४। अत्र "ऋते तु तन्मण्डलतो"—इति श्लोकात् पश्चाद्

अयं वेदमन्त्रोऽधिकं संनिवेश्यः।

"ऋतमेव परमेष्ठि ऋतं नात्येति किञ्चन।

ऋते समुद्र आहित ऋते भूमिरियं श्रिता॥ तै॰ ब्रा॰ २ कां॰॥

३४ पृष्ठे—"गायत्रिका ज्योति"—इति श्लोकानन्तरमयमेकोऽधिकः श्लोकः संनिवेश्यः—

अहानि षष्टित्रिंशतीमितानि रात्र्यश्च षष्टित्रिशतीमिता यत्॥

तद्विंशतिः सप्तशतानि चाह्नां संवत्सरो विश्वमसौ विधत्ते॥ ६१॥

४२ पृष्ठे—"त्रैलोक्यमन्त"—इति श्लोकात् पूर्वं त्रयः श्लोकाः संनिवेश्याः—

यज्ञोऽखिलं विश्वमिदं, प्रजापतिर्यज्ञः, स वाक्प्राणमनोमयश्चितः॥

प्राणोऽन्नमन्नात् सनदत्ति,वाक् ततो मनो,मनो वागिति यज्ञ उच्यते॥ १॥

प्रजापतिः सर्वमिदं, स नाभितः प्रतायमानोऽस्ति समं समन्ततः॥

प्रतान वाक्स्तोमविभक्तयस्त्रयस्त्रिंशन्मतास्तावदहानि रात्रयः॥ २॥

अहानि तावन्ति च ताश्च रात्रयो यज्ञस्य तन्वः प्रभवन्ति संहिताः॥

प्रजापतिर्यज्ञ इमे पृथक् पृथक् यज्ञाः, स यज्ञः पृथगेभिराचितः॥ ३॥

## अथ ब्रह्मविज्ञानशास्त्रे अहोरात्रवादस्य विषयानुक्रमणिकाऽऽरभ्यते—



१ अहः = ज्योतिः ॥ ज्ञानम्[1] शुक्रः[2] प्रकाशः[3] भावः[4] उदयः[5] द्यौः[6] सत्यम्[7] सूर्य्यरसाः[8]

२ रात्रिः= तमः ॥ अज्ञानम् कृष्णः अन्धकारः अभावः प्रलयः पृथ्वी ऋतम् पृथ्वीरसाः

ॐ तत्सत् ।

अथ ब्रह्मविज्ञानशास्त्रे—

# अहोरात्रवादः ।

## १—प्रतिज्ञाधिकारः ।

( १ ) यद्विश्वमाभाति तदेकमूलं यद्वास्य मूलानि बहूनि सन्ति ॥
निर्धारयामः खलु संशयेऽस्मिन् न संभवत्येकममुष्य मूलम् ॥ १ ॥

( २ ) द्विधा द्विधा सर्वमिदं विभाति द्वैतं ततः कारणमत्र विद्मः ॥
द्वाभ्यां बभूवाखिलविश्वमेतद् विद्यादहोरात्रिपदेन ते द्वे ॥ २ ॥
ज्योतिर्व्वहो रात्रिरियं तमो नु ज्योतिस्तमोभ्यां कृतमस्ति विश्वम् ॥
अनेकधा रूपमिह प्रकल्प्य ज्योतिस्तमश्चावृणुतेऽन्यदन्यत् ॥ ३ ॥

(१) (२) (३) (४)
( ३ ) ज्ञानाज्ञाने, शुक्लकृष्णौ च वर्णौ, ज्योतिर्ध्वान्ते, विश्वभावोऽप्यभावः, ॥
(५) (६) (७) (८) (६) (१०)
सृष्टिध्वंसौ, रोदसी, चर्तसत्ये, सत्राहो वा यज्ञसामान्यभेदाः ॥ ४ ॥
इत्थं चाहोरात्रभेदा दशैते सृष्टेरूपं सैव सर्वास्ति सृष्टिः ॥
निर्वक्ष्यामोऽत्राधिकारान् दशैतान् येषां वेदान्नावशिष्येत वेत्तुम् ॥ ५ ॥

## २—ज्ञानाज्ञानाधिकारः ।

( १ ) ज्ञानं हि विद्या तदहः प्रकाशोऽज्ञानं त्वविद्यास्ति तमश्च रात्रिः ॥
यज्जायते विश्वमिदं हि कार्यं निसर्गतोऽज्ञानमिदं तु सिद्धम् ॥ १ ॥

( २ ) ज्ञानं त्रिधास्ति क्षरमक्षरं परं तेषां परं निर्विषयं सदैकवत् ॥
तमोऽखिलं तत्र हितं तथापि तद्वन्धो यतो नास्ति ततो न सृष्टयः ॥ २ ॥

( ३ ) ज्ञानं तमो बन्धकृतैकरूपं मनस्त्वमायाति समस्तकामम् ॥
कामेषु भेदास्तमसः स्वरूपं भिन्नेषु कामावगमोऽस्त्यभिन्नः ॥ ३ ॥
सर्वाप्तकामोऽखिलधर्मसंघोपपन्न आत्माऽक्षर ईश्वरः सः ॥
तदक्षरात् सर्वमिदं प्रजज्ञे सर्वज्ञसर्वात्मकसर्वशक्तेः ॥ ४ ॥

---

| | | १ | २ | ३ | ४ | ५ | ६ | ७ |
|---|---|---|---|---|---|---|---|---|
| १ अहः = ज्योतिः ॥ | | ज्ञानम् । | शुक्लवर्णः । | प्रकाशः । | भावः । | उदयः । | द्यौः । | सत्यम् । |
| २ रात्रिः = तमः ॥ | | अज्ञानम् । | कृष्णवर्णः । | अन्धकारः । | अभावः । | प्रलयः । | पृथ्वी । | ऋतम् । |

तदिन्द्रियं न प्रमितावबोधकं सर्वेन्द्रियः सोऽस्ति निरिन्द्रियोपि सन् ॥
स सर्वदा सर्वविदस्ति निर्भ्रमः स्वप्नाद्यवस्थाश्च न सन्ति तत्र हि ॥ ५ ॥

( ४ ) सूर्य्यस्य तोयप्रतिबिम्बवत्क्वचित् तदीश्वरस्य प्रतिबिम्बसृष्टयः ॥
जीवाहितेऽत्यल्पधियस्तमोऽधिकावरुद्धसंज्ञं तु जगत् क्षरे इमे ॥ ६ ॥

( ५ ) एवंविधा ज्योतिषउद्भवन्त्यमी भेदा यतस्तच्च तमस्त्रिधाभवत् ॥
तमो रजः सत्त्वमिति प्रभेदतो न्यूनाधिकत्वादुभयोरिमा विधाः ॥ ७ ॥
तमो यदि ज्योतिषि संहितं तदा सत्त्वं मतं तद्विपर्यये ग्रहीतृ च ॥
असंहितं ज्योतिषि तत्स्वरूपतस्तमस्ततः स्युर्विषया धिया घृताः ॥ ८ ॥
रूपं तु सांध्यं प्रतिभाति यत्तयोरजस्तदुक्तं निखिलाः क्रियास्ततः ॥
ज्ञाने प्रविष्टा विषयाः पुनस्ततो निर्य्यान्ति सा तत्र रजोमयी क्रिया ॥ ९ ॥
ज्ञानं समर्थ्यादमिदं मितं मे ज्ञाने स्थितं ज्ञेयकुलं ममास्ति ॥
ज्ञेयस्थितं ज्ञानमिदं तथा मे नान्यत् तदन्येन विना कृतं स्यात् ॥ १० ॥
न ज्ञानतोऽन्यत् किमपीदमस्ति ज्ञानानि पञ्चैव तु सृष्टिरूपम् ॥
स्पर्शश्च शब्दो रसरूपगन्धा ज्ञेया न च ज्ञान मितोस्ति भिन्नम् ॥ ११ ॥

( ६ ) ज्ञाने तदित्थं विषयाः प्रविष्टा यथा तथाऽस्मिन् विषयेऽपि नूनम् ॥
ज्ञानं प्रविष्टं भवतीति कृत्वा क्षरेऽक्षरोऽस्मिन् पर इत्यवेयात् ॥ १२ ॥
क्षरे शरीरे निहितः क्षरात्मा जीवस्तदन्तर्विभुरक्षरोऽस्ति ॥
तदन्तरे चास्ति परस्तदित्थं तमोवृतं ज्योतिरहं तथान्ये ॥ १३ ॥

( ७ ) ज्योतिस्तमश्चेत्युभयं परस्परं युक्तं वियुक्तं भवति स्वभावतः ॥
तत्तारतम्यादिदमीदृशं जगत् स्वरूपसंस्थानविचित्रमीक्ष्यते ॥ १४ ॥

## ३—शुक्लकृष्णाधिकारः ।

( १ ) शुक्लं च कृष्णं द्वयमेव रूपं तत्रान्यरूपाणि समर्पितानि ॥
शुक्लं त्वहोरात्रिरिदं तु कृष्णं सन्ध्येव रूपाण्यपराणि यानि ॥ १ ॥

१ । २ । ३ । ४ । ५ । ६ । ७ ।

( २ ) शोणो हिरण्यप्रभ एष पीतो हरिच्च नीलोऽपि च कालधूम्रौ ॥
इमानि सान्ध्यानि विशिष्यरूपाण्येषां विकारा अपरे तु वर्णाः ॥ २ ॥
कालो धूम्रः शोणो हैमः पीतो हरिच्च नीलश्च ॥
एतावदहो रात्रस्याग्नीषोमीयमुच्यते रूपम् ॥ ३ ॥
हुंकारोऽहः कालो धूम्रः प्रस्ताव उद्गीथः ॥
हैमो हरित उपद्रव एवं नीलोऽस्य निधनं स्यात् ॥ ४ ॥
धूम्रः प्रातः संध्या हैमो मध्योऽह्न ओजसा पूर्णः ॥
नीलः सायं सन्ध्या कालस्त्वेकोऽत्र पूर्वपररात्री ॥ ५ ॥
धूम्रे दृष्टस्याग्नेरुद्भ्राभेणैष हेमवर्णोऽभूत् ॥
निभ्राभक्रमतः पुनरस्तायोपक्रमेत हरितेग्निः ॥ ६ ॥
नीलं प्राप्य तु सोऽग्निः शयितुमुपक्रम्य शान्तिमायाति ॥
भवति सुषुप्तः काले तत इह सूर्य्यांशवो विलीयन्ते ॥ ७ ॥

धूम्राद्स्योद्गाभः पीताग्निग्राभ इत्यतोऽस्याग्नेः ॥
षट्पर्वा महिमाऽस्ति हि तावदहर्वर्त्तते विना कालात् ॥ ८
धूम्राद्पि नीलान्ते कालः सहजोऽनुवर्तते किन्तु ॥
त्रिपु निगृह्णीतः शुक्लात् त्रिपु शुक्लं स च निगृह्णाति ॥ ९ ॥
नास्ति हि काले शुक्लो हैमे पीते तु वर्तते कालः ॥
कालो रात्रिस्तस्माद्रात्र्या अह्नः श्रुता सृष्टिः ॥ १० ॥

( ३ ) इत्थं ब्रुवते केचित् पर आहुः काल एव रात्रितमः ॥
ज्योतिरह्नः पुनरस्मिन् संभजते तत्प्रविस्पर्द्धि ॥ ११ ॥
ऐन्द्रं ज्योतिरहस्तत् तमसाख्या वारुणी रात्रिः ॥
शोणान्ते हरिदन्ते ज्योतिपि संधीयते कालः ॥ १२ ॥
इन्द्रवरुणकृतरूपेऽहोरात्रे पुनरहोरात्रः ॥
अन्यः प्रविशति सोऽग्नीपोमीयस्तत्कृतः सर्गः ॥ १३ ॥
हैमः प्रातः सवनं शोणो माध्यन्दिनं सवनम् ॥
धूम्रः सायं सवनं ज्योतिष्येकदिशि तदहराग्नेयम् ॥ १४ ॥
नीलः प्रथमो यामो मध्यमयामो हरिद्रात्रेः ॥
पीतस्तृतीययामः सौम्या रात्रिस्त्रियामेत्थम् ॥ १५ ॥

( ४ ) पीताद्धैमान्तो वा सोमरसो भवति सप्तकलः ॥
अग्निः सप्तविधोऽस्मिन् भवति च कालादिकालान्तः ॥ १६ ॥
हिरण्यपीतान्तरवर्णं पत्राग्निरूपमस्योभयतः प्रसारः ॥
कालस्य नाभौ तु निवर्ततेऽग्निः स एव चाग्नेः प्रभवो गतिश्च ॥ १७ ॥
कालस्य नाभिः किल सोमरूपं तस्यापि तत्रोभयतः प्रसारः ॥
हिरण्यपीतान्तरिदं निवृत्तं स्तव्धोलवणौ तौ च विपर्य्ययेण ॥ १८ ॥

( ५ ) सर्वेऽपि वर्णा यदि चेत् प्रसुप्ता एकत्र लीनाः स्युरयं स कृष्णः ॥
सर्वेऽपि वर्णा यदि चेत् प्रबुद्धा एकत्र दृष्टाः स्युरयं स शुक्लः ॥ १९ ॥
द्वावेव त्विह वर्णौ ज्ञेयौ कृष्णश्च शुक्लश्च ॥
कृष्णादन्ये सर्वे वर्णा इह शुक्लसंभवा ज्ञेयाः ॥ २० ॥
"शुक्रं ते अन्यद् यजतं ते अन्यद् विपुरूपे अहनी द्यौरिवासि ॥
विश्वाहि माया अवसि स्वधावन् भद्रा ते पूपन्निह रातिरस्तु"
( ऋ. सं. मं. ६ । सू. ५८ । ऋ. १ ) ॥ २१ ॥

सिद्धान्तयत्येवमयं महर्षिः सर्वेपि वर्णा इह सन्ति मायाः ।
द्वावेव वर्णावहनी तु मुख्यौ शुक्लश्च कृष्णस्तदहश्च रात्रिः ॥ २२ ॥

( ६ ) सर्गः स एतामयमुच्यतेऽहोरात्रिस्तथैषां प्रलयस्य कालः ॥
निःशेषरूपप्रततिं वदन्ति ज्योतिस्तमश्चाखिलरूपनाशः ॥ २३ ॥

( ७ ) स्पर्शोष्मभेदाद्द्विविधोस्ति शब्दः स्पर्शोपि शीतोष्णभिदा द्विधास्ति ॥
स्पर्शश्च शीतश्च स रात्रिधर्म्मोऽहर्धर्म उष्मा च तथोष्णता च ॥ २४ ॥

## ४—प्रकाशान्धकाराधिकारः ।

प्रकाशमेवाहरिति प्रतीमस्तमस्तु रात्रिं न ततोऽस्ति रिक्तम् ॥
तमस्तु कृष्णाः पृथिवीमयूखाः शुक्ला मयूखा द्युमणेः प्रकाशः ॥ १ ॥
न हि ध्वान्तमीदृग् न यत्र प्रकाशः प्रकाशो न तादृग् न यत्रान्धकारः ॥
तमो वा प्रकाशोपि वा यत्र तत्र प्रतीमस्ततोऽपि प्रकर्षात् प्रकर्षम् ॥ २ ॥
जन्यः प्रकाशोऽस्ति यदा प्रकाशो निरुध्यते तर्हि नियम्य तत्र ॥
नित्यस्थितं भाति तमः स्वतोऽथ प्रकाशतश्चाव्रियते तमोऽपि ॥ ३ ॥
यस्तेजसोऽभाव इदं तमः स्याद् भावः स नेत्याहुरुलूकमुख्याः ॥
तमोपि भावस्तमसो हि शाकायन्यादयः सृष्टिमिमां वदन्ति ॥ ४ ॥
स्याज्ज्योतिषः संभवतस्तु पूर्वं रूपं तमस्तस्य तमः प्रतिष्ठा ॥
यज्ज्योतिषोऽन्ते तम एव रूपं परायणं तेन तमोऽस्य मन्ये ॥ ५ ॥
सूर्ये प्रलीनेऽस्तमितेऽपवारितेऽकस्मात् तमो यद् विभवत्प्रदृश्यते ॥
नापूर्वमायाति तदस्ति तत्र हि ध्रुवं प्रशान्तं विभुनित्यमक्रियम् ॥ ६ ॥
प्रकाशयोगात्तु तिरोभवत्यदो नैकान्ततो नश्यति तन्न नास्ति वा ॥
मन्दप्रभाति प्रभयोर्विशेषवद् भानात् प्रकाशेऽपि तमःस्थितिं विदुः ॥ ७ ॥
वर्णे प्रत्यकृतमसि च वर्णे घनत्वेच तुल्यता दृष्टा ॥
अन्तरतमं तमस्तद् विभु सर्वत्र प्रतीयते नित्यम् ॥ ८ ॥

## ५—भावाभावाधिकारः ।

अभाव इत्युच्यत एष भाववत् प्रतीयमानस्तदसत् सदेव वा ॥
न नास्ति तस्मात् सदथासदेव तद् दिग्देशकालोद्भवसत्यनन्वयात् ॥ १ ॥
अथ क्रियावत् सदिह प्रदृश्यते विश्वात्मना यत् परिवर्तते मुहुः ॥
कृष्णं तदप्यस्ति पुरा तु सृष्टितः सर्वाणि रूपाणि च रूपमस्य हि ॥ २ ॥
* यदुक्तमाथर्वणसंहितायां त्रयोदशे रोहितरोहिणीये ॥
रात्र्या अहर्जन्म तदप्यमुष्या रात्र्या निसर्गस्थितिमाह नित्याम् ॥ ३ ॥
† यावज्जगत् तत् सदहर्विदुस्तत् तमस्तु रात्रिर्यदसत्पुरोक्तम् ॥
नाभ्यां पृथक् किञ्चिदिहास्ति तस्माद् वदाम्यहो रात्रमिदं समस्तम् ॥ ४ ॥
या रात्रिरेषा तम एव तस्या रूपं न लक्ष्मान्यदिहास्ति नाम ॥
क्रियाद्यभावात् तदुपेक्ष्य रात्रीमग्रेऽहरेवात्र निरूपयामः ॥ ५ ॥

## ६—सर्गप्रलयकल्पाधिकारः ।

(१) अनाद्यनन्तं ध्रुवमप्रतर्क्यं परायणं यज्जगतोऽस्य बीजम् ॥
अजं पुराणैरजरं यदाहुस्तद्ब्रह्म तं कालमहं वदामि ॥ १ ॥

---

* कृष्णायाः पुत्रो अर्जुनो रात्र्यावत्सोऽजायत । स ह द्यामधिरोहति रुहो रुरोह रोहितः
[ अथ. १३।३ ]

† ज्योतिर्वै गायत्री । तमः पाप्मा रात्रिः । [ कौ. ब्रा. १७।६ ]

कालोऽयमर्थो जगतोऽस्य हेतुर्द्वे शुक्लकृष्णे भवतोऽस्य रूपे ॥
प्रत्यर्थमन्यान्य ऋतुश्च कालः स्वे स्वे हि काले प्रभवन्ति सर्वे ॥ २ ॥
भूतानि कालः पचतीह कालः प्रजा इमाः संहरते स कालः ॥
सुप्तेषु जागर्ति स एव कार्य्यं स कारणं वै दुरतिक्रमोऽयम् ॥ ३ ॥
अंतः स आदिर्जगतः प्रतिष्ठा नान्तोऽस्य नादिर्न च संप्रतिष्ठा ॥
स एष कालस्तत एव सर्वं प्रजायते तत्र लयं प्रयाति ॥ ४ ॥
कालं तमेवं भगवानथर्वाङ्गिराः पुराऽथर्वणसंहितायाम् ॥
एकोनविंशे निजगाद काण्डे सूक्ते त्रिपञ्चाशमनूत्तरं च ॥ ५ ॥
[ अथर्व सं. १९।५३—५४ ]

(२) स एष कालो द्विविधोऽस्त्यमूर्तो मूर्तश्च मुख्यस्तु तयोरमूर्तः ॥
अमूर्तकालक्रमतस्त्यनन्तब्रह्माण्डरूपप्रलयोदयाः स्युः ॥ ६ ॥
संभूय संभूय विनाशमेवं कालेत्र सूर्य्या अपि यन्त्यनन्ताः ॥
सूर्यस्थितिस्तत्र च शुक्लकालः सूर्य्यस्य नाशेन स एष कृष्णः ॥ ७ ॥

(३) यस्त्वेष मूर्तः प्रथितः स सूर्य्यः सूर्य्याद्धि कालावयवाः प्रथन्ते ॥
सूर्य्यो विभज्यैतदहश्च रात्रिं सृष्ट्वा मुहुः संहरतीह विश्वम् ॥ ८ ॥
शुक्लस्तु कालः प्रतिपद्यतेऽहः कृष्णोऽपरः काल इहास्ति रात्रिः ॥
अहर्भवेत्कर्म विचेष्टनायै निःशेषभूतस्वपनाय रात्रिः ॥ ९ ॥
अहस्तु सृष्टिः प्रलयस्तु रात्रा अहः पुनः स्यात्पुनरेव रात्रिः ॥
इत्थं नु सृष्टिप्रलयावनन्तौ स्यातामहोरात्रविपर्य्ययेण ॥ १० ॥
भवत्यहोरात्रमनन्तभेदं प्रवच्मि तेषां चतुरः प्रभेदान् ॥
प्रधानतो मानुषपित्र्यदैवब्राह्माणि यान्यर्कवशाद्भवन्ति ॥ ११ ॥

(४) काष्ठा मताऽष्टादशभिर्निमेषैस्त्रिंशच्च काष्ठा यदि सा कलैका ॥
त्रिंशत्कलाभिः क्षण एक एते चेद् द्वादशैकः स मतो मुहूर्तः ॥ १२ ॥
यद्वा निमेषैर्दशभिश्च पञ्चभिः काष्ठा भवेत् त्रिंशदिमाः कला भवेत् ॥
त्रिंशत्कलाभिस्तु मुहूर्त इत्यहोरात्रं भवेत् त्रिंशदिमे मुहूर्तकाः ॥ १३ ॥

२. इत्थं मुहूर्तं व्यभजन्तकेचित्केचित्पुनः प्राहुरितोऽपि सूक्ष्मम् ॥
तथाहि कालावयवानवोचत् स वार्कलिः पूर्वयुगे महर्षिः ॥ १४ ॥
* स्वेदायनैः पञ्चदशप्रमाणैः स्याल्लोमगर्तोऽप्यथ तैर्निमेषः ॥
तैरप्यनस्तैरपि तत्प्रमाणैः प्राणोऽथ तैस्तत्प्रमितैरिदानि ॥ १५ ॥

---

* दश च वै सहस्राण्यष्टौ च शतानि संवत्सरस्य मुहूर्त्ताः । [ १०८०० ] यावन्तो मुहूर्ताः—तावन्ति पञ्चदशकृत्वः क्षिप्राणि [ १६२००० ] यावन्ति क्षिप्राणि तावन्ति पञ्चदशकृत्वा एतर्हीणि [ २४३०००० ] यावन्त्येतर्हीणि तावन्ति पञ्चदशकृत्व इदानीनि [ ३६४५०००० ] यावन्तीदानीनि तावन्तः पञ्चदशकृत्वः प्राणाः [ ५४६७५०००० ] यावन्तः प्राणास्तावन्तोऽनाः, यावन्तोऽनास्तावन्तो निमेषाः, यावन्तो निमेषास्तावन्तो लोमगर्ताः, यावन्तो लोमगर्तास्तावन्ति स्वेदायनानि ।, यावन्ति स्वेदायनानि तावन्त एते स्तोकां वर्षन्ति । "एतद्धस्म वै तद्विद्वानाह वार्कलिः-सार्वभौमं मेघं वर्षन्तं वेदाहमस्य वर्षस्य स्तोकानिति ॥" [ इति शतपथे १२ कां. ३ अ. १० ब्रा. ] ॥

एताहितैः क्षिप्रमभीभिरेतैरेको मुहूर्तोऽपि च तत्प्रमाणैः ॥
भवन्त्यहोरात्रगता मुहूर्तास्त्रिंशत् ततोऽन्ये परिचिन्तनीयाः ॥ १६ ॥

३· संवत्सरे स्युर्दश वै सहस्राण्यष्टौ शतान्यप्यखिला मुहूर्ताः ॥ [ १०८०० ]
खखाभ्रशून्येषु महीभृदङ्गवेदेषुमित्या प्रभवन्ति प्राणाः ॥ १७ ॥
[ ५४,६७,५०,००० ]
त्रिंशत्प्रमाणैस्तु यथा मुहूर्तैर्भवेदहोरात्रमिहैकमेवम् ॥
तत्त्रिंशता मास उदेति मासैः संवत्सरो द्वादशभिर्निरुक्तः ॥ १८ ॥
संवत्सरे द्वे अयने भवेतां विवस्वतो दक्षिणमुत्तरं च ॥
यथात्वहोरात्रमिदं द्विभागं संपद्यतेऽह्ना परया च रात्र्या ॥ १६ ॥
तथैव मासोऽपि भवेद् द्विभागो वर्द्धिष्णुपक्षापरपक्षरूपः ॥
संवत्सरोप्येवमयं द्विभागस्तौ तेषु भागावपि शुक्लकृष्णौ ॥ २० ॥
इदं त्वहोरात्रमिहास्ति मानुषं संवत्सरोऽप्यास्ति समानुषस्तथा ॥
एतत्प्रधानं प्रथमं निदर्शनं तस्यानुकृत्यैव पराणि भावयेत् ॥ २१ ॥

४. पित्र्यं त्वहोरात्रमुशन्ति मानुषान्मासादमामध्यदिनं निरूप्यते ॥
या पौर्णमासी किल मानुषे जने स स्यान्निशीथः पितृलोकवासिनाम् ॥२२ ॥
दैवं त्वहोरात्रमुशन्ति मानुषाद्वर्षान्निशीथः किल दक्षिणायने ॥
अन्त्यं दिनं मध्यदिनं भवेदिहोत्तरायणेऽन्त्यं दिनमित्थमूह्यताम् ॥ २३ ॥
संवत्सराणामिह मानुषाणां षष्ट्युत्तरा या त्रिशती ततः स्यात् ॥
संवत्सरो दैवत एक इत्थं ब्राह्मं त्वहो वक्ष्यथ दैववर्षात् ॥ २४ ॥

(५) दिव्यं कलिर्वर्षसहस्रमेकं द्वे द्वापरस्त्रीणि तु तानि तत्र ॥
त्रेताथ चत्वारि कृतं शतानि तावन्ति पूर्वत्र परत्र सन्धिः ॥ २५ ॥
शतानि तु द्वादशवत्सराणां कलिस्ततो द्वापर एष चेद्वृद्धिः ॥
त्रेता यदित्रिर्हि चतुः कृतं स्यात् पूर्वं कृतं स्यात्कलिरन्ततः स्यात् ॥ २६ ।
इत्थं चतुर्भिस्तु युगैरिहैकं दिव्यं युगं द्वादशभिः सहस्रैः ॥
संवत्सरैः संमितमस्ति तावत्कालेन सूर्य्यैककरो निरेति ॥ २७ ॥

(६) दिव्यैर्युगैस्तेन सहस्रसंख्यैः कल्पो भवेद्ब्राह्ममहस्तादिष्टम् ॥
कालेन तेनैष सहस्ररश्मिर्यातियस्तामित्यस्ति हि भूतरात्रिः ॥ २८ ॥
कोटिस्तदा दैवतवत्सराणामेका भवेद्विंशतिलक्षयुक्ता ॥
[ १२०००००० देववर्षैः कल्पः ]
एतावता ब्रह्मदिनाख्यकल्पः स्यात् तावतैवास्य निशाख्यकल्पः ॥ २६ ॥
मर्त्यक्रमेणास्य विभागमित्थं कुर्य्याच्चतुष्कं च त्रिकं द्विकं च ॥
* बिन्दुत्रयं चेति कलेः प्रमाणं द्विस्त्रिश्चतुश्चेति युगान्तराणि ॥ ३० ॥
अथो चतुष्कं च त्रिकं द्विकं च चत्वार एवोत्तरबिन्दवश्च ॥
तत्संमितैरत्र मनुष्यवर्षैः प्रपद्यते दिव्ययुगस्य कालः ॥ ३१ ॥
[ ४३२०००० दिव्ययुगम् ]

---

* [ ४३२०० कलिः ८६४००० द्वापरः १२९६००० त्रेता १७२८००० कृतम् ]

अथो चतुष्कं च त्रिकं द्विकं च सप्तस्युरत्रोत्तरबिन्दवश्च ॥
तत्सम्मितैरत्र मनुष्यवर्षैः प्रपद्यते ब्रह्मदिनप्रमाणम् ॥ ३२ ॥
[ ४३२०००००० कल्पः ]

ब्राह्मं त्वहः स्यादिह यत्प्रमाणं तावत्प्रमाणैव च ब्रह्मरात्रिः ॥
अहश्च कल्पोऽथ निशा च कल्पस्ताभ्यामहोरात्रविधिर्विधेः स्यात् ॥ ३३ ॥
विश्वस्य यद्ब्रह्मदिने प्रवृत्तिर्निवृत्तिरस्याथ दिनात्यये यत् ॥
ब्राह्मं त्वहस्ते न हि सृष्टिकालो ब्राह्मी तु रात्रिः प्रलयस्य वेला ॥ ३४ ॥
कल्पादिकाले ह्यहरागमेऽस्मिन्नव्यक्ततो व्यक्तय उद्भवन्ति ॥
रात्र्यागमे चापरकल्पकालेऽव्यक्ते हि तत्रैव लयं प्रयान्ति ॥ ३५ ॥
अनन्त एव क्रमते स भूतग्रामस्य सृष्टिप्रलयप्रवाहः ॥
विलीय रात्र्यागमने पुनः सोऽहरागमे प्राग्वदुदेति भूयः ॥ ३६ ॥
कालस्य चाव्यक्तदशैव रात्रिर्व्यक्तं तु रूपं ह्यहरेव तस्य ॥
(७) * अहः प्रतिष्ठा त्वहरेव सृष्टिः सृष्टेश्च रात्र्येव परायणं स्यात् ॥ ३७ ॥
तमस्तु रात्रिस्तमसोऽपनोदं वैश्वानरोऽग्निर्व्यदधात् स्वयम्भूः ॥
अहस्तदासीद्द्विविधं च शुक्लं कृष्णं भरद्वाज इति प्रवक्ति ॥ ३८ ॥
† (८) "अहश्च कृष्णमहरर्जुनं च विवर्तेते रजसी वेद्याभिः ॥
वैश्वानरो जायमानो न राजाऽवातिरज्ज्योतिषाऽग्निस्तमांसि ॥ ३९ ॥
[ मं. ६ । सू. ९ । ऋ. १ ]

(९) अह्नो विभागे कलिता मुहूर्ता भवन्ति यत्पञ्चदशैव तस्मात् ॥
ब्राह्मेऽहनीहाप्युचितामुहूर्तास्तथैव ते पञ्चदशैव किन्तु ॥ ४० ॥

---

* " रात्रिं वा अनुप्रजाः प्रजायन्ते । अह्ना प्रतितिष्ठन्ति । ( तै. ब्रा. २।१।२ ) ॥ इति श्रुतौ रात्र्याः सृष्टिहेतुत्वमर्वाचीनाहोरात्रपरम् । "आग्नेयी वै रात्रिः । ऐन्द्रमहः" इति तत्रैवोक्तेः । कल्पाहोरात्रपक्षे तु अहरेव प्रतिष्ठा च सृष्टिश्च । "ब्राह्मं पुण्यमहर्यच्च सृष्ट्युत्पादनकारकम् । वेदवृक्षोद्भवं नित्यं तत्पुण्याहं ब्रुवन्तु नः"—इति पुण्याहवाचनस्मृतेः ॥

† अहश्च कृष्णमिति सामानाधिकरण्यादहःशब्दो रात्रिवचनः । तमसाहिरात्रिः कृष्णवर्णा, अर्जुनं शुक्लं सौरेण तेजसा । वेद्याभिरनुकूलतया ज्ञातव्याभिः स्वप्रवृत्तिभिः इमे रजसी जगद्रञ्जयती अहनी द्यावापृथिव्यौ वा विविधं पर्य्यावर्तेते । एतच्च प्रत्यावर्तनं वैश्वानरकर्म्मणा वेदितव्यम् । स हि वैश्वानरोऽग्निः प्रवर्द्धमानो राजेव ज्योतिषा तेजसा तमांसि अवातिरद् व्यनाशयत्—इति सायणभाष्यम् ॥ .[ ८।१।११ ] * ॥ अथवा अहरित्यंशवचनः । सूर्य्यो हि प्रत्यहमुदयक्षयावच्छिन्नकालेन यावदाकाशमतिक्रामन् दृश्यते स एकोंऽशः तेषामंशानां षष्ट्युत्तरत्रिशत्येदमाकाशमण्डलं पर्य्याप्नोति । तद्भोगकालः संवत्सरः । तत्र चाह्नां षष्ट्युत्तरत्रिशती संपद्यते । तस्मादंशेऽयमहः शब्दः सिद्धः । एकैकस्य च तस्यांशस्य द्वौ भागौ भवतः । एकस्तमोमयः कृष्णः । परः प्रकाशमयः शुक्लः तेनैकमहरेव कृष्णं शुक्लं चेति व्यपदिश्यते । शुक्लकृष्णयोरङ्कत्वादहर्भागयोरञ्जनद्व्यत्वव्यपदेशः द्यावापृथिव्योर्वा रजः शब्दो वेदे प्रसिद्धः । दिवः सूर्य्यस्य सांमुख्याच्छुक्लं पृथिव्याव्यवच्छेदात्कृष्णमितिद्यावापृथ्वीमूलकत्वादहर्भागयोरजः शब्दः । वेद्याभिः वेदक्रियाभिः यज्ञो हि वेदक्रियाः । ततो हि पृथ्वीपरिवर्तनं श्रूयते–यत्र इन्द्रमवर्द्धयद् यद्भूमिं व्यवर्तयदिति मन्त्रवर्णात् ॥

अस्मिन् सहस्रे विभवन्ति नैते व्यूहा यतः पञ्चदशेति हेतोः ॥
चतुर्दशव्यूहविधानमिदं यः शिष्यते पञ्चदशः स भागः ॥ ४१ ॥
ब्राह्मदिनीमांस्तु मुहूर्तभागान् मन्वन्तराणीति वदन्ति नाम्ना ॥
मन्वन्तराणीह चतुर्दश स्युर्ब्राह्मेऽह्नीमे हि मुहूर्तरूपाः ॥ ४२ ॥
एकैकमन्वन्तरगानि विद्यात् तत्रैकसप्तत्यभिसंमितानि ॥
युगानि दिव्यानि ततो विभागो विज्ञायते ब्राह्मदिनस्य सम्यक् ॥ ४३ ॥
स्वायंभुवं स्यात्प्रथमं ततोऽन्यत् स्वारोचिषं चोत्तमतामसे च ॥
स्याद्रैवतं चाक्षुषमन्यदस्माद्वैवस्वतं सप्तममामनन्ति ॥ ४४ ॥
अन्ये तु सावर्ण्य एव सप्त स्युरुत्तरार्द्धेऽह्नि चान्तरेशाः ॥
ते चार्कदक्षाभिधब्रह्मधर्मरुद्राख्यदेवेन्द्रपदैः प्रसिद्धाः ॥ ४५ ॥
य उत्तमः स क च रौच्य उक्तः स भौत्य उक्तः क च तामसो यः ॥
मन्वन्तराणां च तदित्थमुक्तान्येतानि नामानि चतुर्दशानाम् ॥ ४६ ॥
ब्राह्मं त्वहोरात्रमिह द्विकल्पं तत्त्रिंशता ब्राह्म उदेति मासः ॥
तत्कल्पनामानि वदन्ति केचित्पौराणिकास्तानि विनिर्दिशामि ॥ ४७ ॥
तौ श्वेतवाराहकनीललोहितौ स वामदेवोऽथ रथन्तरोऽपि च ॥
स रौरवः प्राण उतो बृहत्तथा कंदर्पसत्या चयमीशनोऽपि च ॥ ४८ ॥
व्यानश्च सारस्वत इत्युदानः स गारुडः कौर्म इहादिपक्षे ॥
स नारसिंहोऽथ समानकल्पोऽप्याग्नेयसोमावथ मानवश्च ॥ ४९ ॥
तत्पूरुषश्चाथ विकुण्ठलक्ष्मी सावित्रिका घोरवराहसंज्ञाः ॥
वैराजगौर्यौ च महेश्वरश्च स्यात्पैत्र्यकल्पोपि च कृष्णपक्षे ॥ ५० ॥
कृष्णे तु सोमप्रमुखाप्रकारकस्थानेऽस्ति संज्ञासु विपर्ययः क्वचित् ॥
वाराहघोरावथ सोममानवौ सुतौ विकुंठार्चिपलक्ष्म्य इत्यपि ॥ ५१ ॥
यः कूर्मकल्पः स हि पौर्णमासी यः पित्र्यकल्पः स भवेदमा च ॥
त्रिंशत्तु कल्पा यदि मास एकस्ते द्वादश ब्रह्मण एकवर्षम् ॥ ५२ ॥
शतं तु वर्षाणि जगत्प्रसृष्टेः स्यादायुरूर्ध्वं महती विनष्टिः ॥
इत्याहुरेके न तथानुमन्ये सोऽनाद्यनन्तो हि जगत्प्रवाहः ॥ ५३ ॥

(१०) ब्राह्मे विदुर्वर्षशते प्रवृत्ते पञ्चाशदब्दान्यतिवाहितानि ॥
अथैकपञ्चाशमिदं तु वर्षं तत्रापि मासः प्रथमोऽयमस्ति ॥ ५४ ॥
शुक्ले तु पक्षे प्रथमं दिनं यत् स श्वेतवाराह इहाद्यकल्पः ॥
तत्रापि मन्वन्तरषट्कमाद्यं गतं पुनः सप्तममेतदस्ति ॥ ५५ ॥
अत्रापि दिव्यानि युगानि भुक्तान्याचक्षते सप्त च विंशतिं च ॥
प्रवर्तमाने तु चतुर्युगेऽष्टाविंशे कलिः संप्रति वर्ततेऽयम् ॥ ५६ ॥
अथात ऊर्ध्वं तु यदा त्रयोदश त्रिंशच्च भोदयन्ति चतुर्युगान्यपि ॥
तदा भवेन्मध्यदिनं ततः परं सावर्णिमन्वंतरमुत्प्रवत्स्यतीति ॥ ५७ ॥

(११) तत्रास्य हि ब्रह्मदिनस्य कालः कियानतीतोऽभवदद्य यावत् ॥
इत्यर्थमुत्प्रेक्षयितुं प्रमाणं मनुष्यवर्षैरुपकल्पयामि ॥ ५८ ॥

त्रिंशत्तु कोट्यः सह सप्तषष्टिलक्षैस्तथैव द्व्ययुतैरुपेताः ॥
मन्वन्तरे मानुषहायनानां भवन्ति ताः षड्गुणिता अतीताः ॥ ५९ ॥
खखाभ्रखद्वित्रिखवेदहस्तेन्दुसंमितैर्मानुषवर्षजातैः ॥
मन्वन्तराणां भवतीह षण्णां प्रमाणमेतावदिह व्यतीतम् ॥ ६० ॥
कोट्यः सहैकादशवत्सराणां षट्षष्टिलक्षैरयुतैश्चतुर्भिः ॥
(११६६४००००)
चतुर्युगानां गिरिदृग्मितानां संपद्यते मानमिदं च भुक्तम् ॥ ६१ ॥
अष्टौ सहस्राण्ययुते पुनर्द्वे लक्षाण्यथो सप्तदशेति सत्यम् ॥
(१७२८०००)
स्यात् षट्सहस्रैश्च नवायुतैश्च त्रेता सह द्वादशलक्षवर्षैः ॥ ६२ ॥
(१२९६०००)
स्याद् द्वापरोऽपि प्रमितोऽष्टलक्षैस्तथा चतुः षष्टिसहस्रवर्षैः ॥
(८६४०००)
कलेः पुनः पञ्चसहस्रवर्षाण्यथातियातानि वदन्ति वृद्धाः ॥ ६३ ॥
(५०००)
एषां पुनः संकलना कृता चेद्विज्ञायतेऽद्यावधिसृष्टिकालः ॥
खखाभ्ररामेषुगजाभ्रषड्गोचन्द्रोन्मितैर्मानुषवर्षजातैः ॥ ६४ ॥
(११६०८५३०००)
शैलाद्रिगोचन्द्रमितास्तु वत्सरा अथात्यगुर्विक्रमराजकालतः ॥
द्विवेदनागैकमिताः शकाब्दका गोचन्द्रगोचन्द्रमितेशवत्सराः ॥ ६५ ॥
यस्याष्टपञ्चाशदगुश्च वत्सरा जातस्य यो मत्स्यमहीमहेश्वरः ॥
यस्यास्मि धर्माधिकृतः स सांप्रतं विराजते माधवसिंहभूपतिः ॥ ६६ ॥
खखाभ्रसप्तद्विचतुर्मिताब्दैः शेषैः कलेः शेषचतुर्युगानाम् ॥ (४२७०००)
खखाभ्रखाङ्काद्रिशरेभचन्द्रैरब्दैर्भवेदर्द्धदिनस्य पूर्तिः ॥ ६७ ॥
(१८५७६००००)
खखाभ्रखाब्ध्यभ्रनगाब्धिचन्द्राद्विसंमितैरूर्ध्वदिनार्द्धवर्षैः ॥
(२१४७०४००००)
खखाभ्रखद्व्यङ्कशरद्विमानैर्वर्षैस्तु सान्ध्यैरिह कल्पपूर्तिः ॥ ६८ ॥
(२५९२००००)
एषां पुनः संकलना कृता चेत् सिद्धोऽवशिष्टोत्तरसृष्टिकालः ॥
खखाभ्रसप्ताब्धिकुगोशरत्रिद्विसंमितैर्मानुषवर्षजातैः ॥ ६९ ॥
(२३५९१४७०००)
तदित्थमुक्ता बहुभिः पुराणैः सृष्ट्यव्यवस्था दिनरात्रिक्लृप्ता ॥
तस्यां गतानागतकालयोर्या दृष्टिः कृतापैष्यदशैव सा स्यात् ॥ ७० ॥
खं खं खमभ्रं वियदभ्रखद्वित्रिवेदमित्थं मितिरेककल्पे ॥ (४३२००००००)
संवत्सराणामिह मानुषाणामहश्च रात्रिश्च विधेस्तथा स्यात् ॥ ७१ ॥
अत्राहुरेके दिवसैस्तु सप्तभिर्ब्रह्माखिलं विश्वमिदं ससर्ज ह ॥
तान् सप्तकल्पानपि चक्षते पृथक् पौराणिकाः किन्तु न वैदिका विदुः ॥ ७२ ॥

## वार्कलिनाम्न ऋषेर्मते—

१५ स्वेदायनानि ... १ लोमगर्तः
१५ लोमगर्ताः ... ... १ निमेषः
१५ निमेषाः ... ... १ अनः
१५ अनाः ... ... १ प्राणः
१५ प्राणाः ... ... १ इदम्
१५ इदानि ... ... १ एतर्हि
१५ एतर्हीणि ... ... १ क्षिप्रम्
१५ क्षिप्राणि ... ... १ मुहूर्तः
३० मुहूर्ताः ... ... १ अहोरात्रम्

## पुराणकारमते—

१५ निमेषाः ... ... १ काष्ठा
३० काष्ठाः ... ... १ कला
३० कलाः ... ... १ मुहूर्त्तः
३० मुहूर्ताः ... ... १ अहोरात्रम्

## अमरमते—

१८ निमेषाः ... ... १ काष्ठा
३० काष्ठाः ... ... १ कला
३० कलाः ... ... १ क्षणः
१२ क्षणाः ... ... १ मुहूर्तः
३० मुहूर्ताः ... ... १ अहोरात्रः
३० अहोरात्राः ... ... १ मासः
१२ मासाः ... ... १ संवत्सरः

## साधारणमते

१५ कलाः ... ... १ घटी
२ घट्यौ ... ... १ मुहूर्तः
१५ मुहूर्ताः ... ... १ अहः
२ अहनी ... ... १ अहोरात्रम्
१५ अहोरात्राः ... ... १ पक्षः
२ पक्षौ ... ... १ मासः
६ मासाः ... ... १ अयनम्
२ अयने ... ... १ संवत्सरः

| | कल्पे मन्वन्तराणि | मन्वन्तरे दिव्ययुगानि | | |
|---|---|---|---|---|
| १ | स्वायम्भुवम् ... | ७१ | ...... | ७१ |
| २ | स्वारोचिषम् ... | ७१ | ...... | १४२ |
| ३ | उत्तमम् ... | ७१ | ...... | २१३ |
| ४ | तामसम् ... | ७१ | ...... | २८४ |
| ५ | रैवतम् ... | ७१ | ...... | ३५५ |
| ६ | चाक्षुषम् ... | ७१ | ...... | ४२६ |
| ७ | वैवस्वतम् ... | ७१ | ...... | ४९७ |
| ८ | सूर्य्यसावर्णिः ... | ७१ | ...... | ५६८ |
| ९ | दक्षसावर्णिः ... | ७१ | ...... | ६३९ |
| १० | ब्रह्मसावर्णिः ... | ७१ | ...... | ७१० |
| ११ | धर्म्मसावर्णिः ... | ७१ | ...... | ७८१ |
| १२ | रुद्रसावर्णिः ... | ७१ | ...... | ८५२ |
| १३ | देवसावर्णिः ... | ७१ | ...... | ९२३ |
| १४ | इन्द्रसावर्णिः ... | ७१ | ...... | ९९४ |
| १५ | सन्ध्या ........ | ६ | ...... | १००० |

## त्रिंशत्कल्पास्त्रिंशद्दिनान्येको ब्रह्ममासः

| | |
|---|---|
| १ श्वेतवाराहः | १ नारसिंहः |
| २ नीललोहितः | २ समानः |
| ३ वामदेवः | ३ आग्नेयः |
| ४ रथन्तरः | ४ सौम्यः |
| ५ रौरवः | ५ मानवः |
| ६ प्राणः | ६ तत्पुरुषः |
| ७ वृहत् | ७ वैकुण्ठः |
| ८ कन्दर्पः | ८ लक्ष्मी |
| ९ सत्यः | ९ सावित्री |
| १० ईशानः | १० अघोरः |
| ११ व्यानः | ११ वराहः |
| १२ सारस्वतः | १२ वैराजः |
| १३ उदानः | १३ गौरी |
| १४ गारुडः | १४ महेश्वरः |
| १५ कूर्मः | ३० पितृकल्पः |
| शुक्लपक्षः | कृष्णपक्षः |

| | युगानि | सन्धिकालः | मध्यकालः | संध्यांशाः | समष्टिः |
|---|---|---|---|---|---|
| देवतवर्षमानानि | सत्ययुगम् | ४०० | ४००० | ४०० | ४८०० |
| | त्रेतायुगम् | ३०० | ३००० | ३०० | ३६०० |
| | द्वापरयुगम् | २०० | २००० | २०० | २४०० |
| | कलियुगम् | १०० | १००० | १०० | १२०० |
| | चतुर्युगम् | ...... | ...... | ...... | १२००० |
| | दिनकल्पः | ...... | ...... | १२० ००००० | |
| | रात्रिकल्पः | ...... | ...... | १२० ००००० | |
| मानुषवर्षमानानि | सत्ययुगम् | ... | ... | १७२८००० | |
| | त्रेतायुगम् | ... | ... | १२९६००० | |
| | द्वापरयुगम् | ... | ... | ८६४००० | |
| | कलियुगम् | ... | ... | ४३२००० | |
| | चतुर्युगम् | ... | ... | ४३२०००० | |
| | दिनकल्पः | ... | ... | ४३२००००००० | |
| | रात्रिकल्पः | ... | ... | ४३२००००००० | |

एकस्मिन् मन्वन्तरे मानुषवर्षाणि ३०६७२००००

षट्सु मन्वन्तरेषु मानुषवर्षाणि १८४०३२००००

सप्तविंशतिर्दिव्ययुगानां मानुषवर्षाणि ११६६४००००

सत्ययुगे मानुषवर्षाणि १७२८०००

त्रेतायुगे मानुषवर्षाणि १२९६०००

द्वापरयुगे मानुषवर्षाणि ८६४०००

कलेर्भुक्तानि मानुषवर्षाणि ५०००

अद्यावधिसृष्टेर्भुक्तकालः १९६०८५३०००

कलेर्भोग्यानि मानुषवर्षाणि ४२७०००

त्रिचत्वारिंशद्दिव्ययुगानां मानुषवर्षाणि १८५७६००००

उत्तरदिनार्द्धे सप्तमन्वन्तराणां वर्षाणि २१४७०४००००

चतुर्दशमन्वन्तरान्ते सन्धिकालः २५९२००००

अद्यप्रभृतिसृष्टेर्भोग्यकालः २३५९१४७०००

| पुराणमते निमेषाः | |
|---|---|
| काष्ठा ... | १५ |
| कला ... | ४५० |
| मुहूर्तः ... | १३५०० |

| अमरमते निमेषाः | |
|---|---|
| काष्ठा ... | १८ |
| कला ... | ५४० |
| क्षणः ... | १६२०० |
| मुहूर्तः ... | १९४४०० |

| वार्कलिमते निमेषाः | |
|---|---|
| अनः ... | १५ |
| प्राणः ... | २२५ |
| इदम् ... | ३३७५ |
| एतर्हि ... | ५०६२५ |
| क्षिप्रम् ... | ७५९३७५ |
| मुहूर्तः ... | ११३९०६२५ |

## द्यावापृथिव्यधिकारः ।

१—जगन्ति नानाप्रलयोदयाभ्यां भवन्त्यहोरात्रमिदं पृथग्वत् ॥
द्यावापृथिव्यः प्रतिविश्वमन्तर्हिता अहोरात्रपदानि तानि ॥ १ ॥
चिन्मण्डले वैद्युतमण्डलात्परागापोमयं वारुणमण्डलं हितम् ॥
तस्मिन् पुनः सौमिकमण्डलात्पराग्हिरण्मयं भास्करमण्डलं त्विदम् ॥ २ ॥
तस्मिन् भृगोर्मण्डलतः परागिदं भूमण्डलं चाङ्गिरसा कृतोदरम् ॥
तस्मिन् पुनः सौमिकमण्डलं हितं चन्द्राख्यमित्थं जगदेकमिष्यते ॥ ३ ॥
एषां द्वयोर्व्यापि महत्तु मण्डलं द्यौः स्यात् पृथिव्यान्तरमण्डलं लघु ॥
दिवस्तु यावत् पृथिवीमिहैकवद् द्यावापृथिव्यौ बहुधा तु ते मते ॥ ४ ॥
चिद् द्यौः पृथिव्यस्ति हि वारुणं पदं द्यौर्वारुणं सूर्य्यपदं पृथिव्यपि ॥
द्यौः सूर्य्य एषा पृथिवी पृथिव्यतोऽन्यत्रापि ते द्वे बहुधा विभावयेत् ॥ ५ ॥
यद् विश्वमेतत्प्रतिभाति तस्मिन् द्यावापृथिव्यो बहवो निविष्टाः ॥
तासामिमां भूमिममुं च सूर्य्यं प्रस्तुत्य लोकत्रयमुल्लिखामि ॥ ६ ॥

२—द्यावापृथिव्याविह सृष्टिरूपे सा द्यौरहः सा पृथिवी तु रात्रिः ॥
द्यौरर्जुनीयं पृथिवी तु कृष्णा सन्ध्यान्तरिक्षं तदु लोहितं स्यात् ॥ ७ ॥
त्रैलोक्यमेतज्जगतोऽस्य योनिर्द्यौरेष सूर्य्यः पृथिवी तु भूमिः ॥
तयोरहोरात्रपदे निरूढे योनी हि ते एव तयोर्भवेताम् ॥ ८ ॥
सूर्य्यः सदा दीव्यति तेन स द्यौरह्नोति पृथ्वीमनु तेन चाहः ॥
भूमिः पृथुत्वं हि गताऽखिलेभ्यः पृथ्वी ततः सा प्रथते प्रतिष्ठा ॥ ९ ॥
द्यौः प्राणितीयं तत एव तस्याः प्राणाः पराञ्चो हि न ते लभेरन् ॥
अन्नं यदीयं पृथिवी न रायादपानती तेन वदन्ति रात्रीम् ॥ १० ॥
द्यां जिन्वतीयं तु रथन्तरेण द्यौर्जिन्वतीमां बृहता तु पृथ्वीम् ॥
अमूमियं जिन्वति नौधसेन श्यैतेन चासावपि जिन्वतीमाम् * ॥ ११ ॥
रथन्तरं यच्च विरूपपृष्ठं यच्छाकरं ते पृथिवीरसाः स्युः ॥
वाग् गौरथ द्यौरिति नामतस्ते पृथक् पृथिव्या दिवमाक्रमन्ते ॥ १२ ॥
ज्योतिश्च गौरायुरिमे रसाः स्युः सूर्य्यस्य पृष्ठानि भवन्ति तेषाम् ॥
बृहच्च वैराजकरैवते च प्राप्ता इमेऽर्वाग्गतयोऽत्र पृथ्व्याम् ॥ १३ ॥
रथन्तरं यद् यदु वामदेव्यं यन्नौधसं ताः पृथिवीरसानाम् ॥ ...
लोकत्रयाच्छन्दितभक्तयः स्युर्द्यौर्नौधसेनास्ति रसेन पूर्णा ॥ १४ ॥
बृहद्दिवि प्रागथ वामदेव्यं श्यैतं ततोधस्त इमेऽत्र भागाः ॥
दिवो रसानामत एव पृथ्वी श्यैतेन पूर्णास्ति दिवो रसेन ॥ १५ ॥
कृता दिवा नौधसभक्तिरस्याः श्यैतं तु पृथ्व्या विहिता द्युभक्तिः ॥
श्यैतं दिवे भूरथ नौधसं द्यौर्ददौ पृथिव्या इति ताण्ड्य आह ॥ १६ ॥ (७।१०)

---

* मै. ब्रा. १।१।३ ( १।२।१ ) ( तै. ब्रा. भा. १।१।८।३ ( तांड्य ब्रा. ७ । १० । ५–८ )

बृहत् परोक्षं खलु नौधसं यत् पृथ्वीरसस्ते हि दिवो विकाराः ॥
श्यैतं परोक्षं तु रथन्तरं तत् शुक्लाः पशव्यास्त इहोपभागाः ॥ १७ ॥
धूमेन तु द्यामिह जिन्वतीयं वृष्ट्या त्वसौ द्यौरपि जिन्वतीमाम् ॥
अधात्तु दैवं यजनं दिवीयं पर्जन्यधाद् द्यौरपि वा पृथिव्याम् ॥ १८ ॥
अन्योन्यतोऽन्नं नियतं मही द्यौ क्षीणे भवेतां न कदाचिदेते ॥
आभ्यामहोरात्रपदश्रुताभ्यां भूत्वा तयोस्तिष्ठति विश्वमेतत् ॥ १९ ॥

३—* द्यौः सूर्य्य ऐन्द्रोऽस्ति स इन्द्र एवाग्नेयी तु पृथ्वी यमतोऽग्निरस्ति ॥
आहुस्ततश्चैन्द्रमहस्तथैवाग्नेयीन्तु रात्रीमिह तैत्तिरीयाः ॥ २० ॥
प्रजायते रात्रिमनु प्रजेयमह्ना पुनः सा प्रतितिष्ठतीत्थम् ॥
यदाहुरग्नेरिह सास्ति सृष्टिः सा च प्रतिष्ठेन्द्र इति प्रविद्यात् ॥ २१ ॥
अह्नां विभक्तिर्भवतीह रात्री राज्या अभावेऽहरलक्षणं स्यात् ॥
नित्यं तदेकं त्वहरेव रात्रि प्रभक्तितोऽनेक विधत्वमेति ॥ २२ ॥
एकेन चाह्ना बहुभिस्त्वहोभिः स्रष्टाऽसृजत्तं तमशेषमर्थम् ॥
यथा त्वहोभिर्बहुभिः प्रसृष्टिस्तथोदितं यज्ञविधौ प्रविद्यात् ॥ २३ ॥
ज्योतींषि देवा दिवि ते निविष्टा भूतानि वाचः पृथिवीस्थितानि ॥
देवाश्च भूतानि च सृष्टयः स्युर्भूतेषु देवाः समधिष्ठिताः स्युः ॥ २४ ॥
अनेकधाराभिरितो दिवं च प्रयान्त्यथा यान्ति दिवश्च पृथ्वीम् ॥
† पयोघृताद्या बहवो रसा यत् तद्वै भरद्वाजमहर्षिराह ॥ २५ ॥
‡ असश्चन्ती भूरिधारे पयस्वती घृतं दुहाते सुकृते शुचिव्रते ॥
राजन्ती अस्य भुवनस्य रोदसी अस्मेरेतः सिञ्चतं यन्मनुर्हितम् ॥ २६ ॥
( ऋ. सं. ६ मं. ७० सू. २ ऋ. )

---

* "आग्नेयी वै रात्रिः । ऐन्द्रमहः"—( तै. ब्रा. २।१।२ )॥ रात्रिं वा अनुप्रजाः प्रजायन्ते, अह्ना प्रतितिष्ठन्ति ( तै. ब्रा. २।१।२ )

† लवणेक्षुसुरासर्पिर्दधिक्षीरजलाः समाः इत्युक्तेः ।

‡(१) असश्चन्ती इति । असज्यमाने व्युदस्यन्त्यौ वा, बहुधारे उदकवत्यौ शुचिक्रिये द्यावापृथिव्यौ सुकर्मकारिणे यजमानाय घृतं सस्यादिसमृद्धिहेतूदकं दुहाते ॥ हे रोदसी अस्य भूतजातस्य राजन्ती ईशाने युवाम् अस्मासु रेतः प्रजननसमर्थं वीर्य्यं सिञ्चन्तम् । यद् रेतो मनुष्येभ्यो हितं स्यात् ॥ इति यास्कसायणौ ब्रूतः ॥

(२) द्यौरिति । द्यौरादित्यो मे पालको जन्मदाता । अत्र दिवि नाभिभूतो भौमो रसोऽस्ति ततोऽन्नमन्नाद्रेतस्ततो मनुष्य इति परम्परया जनकत्वम् । अम्बिका चेयं पृथ्वी मातृस्थानीया । ऊर्ध्वेतानयोः सर्वभक्षकयोर्द्यावापृथिव्योर्मध्ये योनिर्निर्माणाश्रयमन्तरिक्षमस्ति । अत्रान्तरिक्षे पिता सूर्य्यः स्वरश्मिभिः दुहितुर्दूरेति हितायाः पृथिव्या वृष्ट्युदकलक्षणं गर्भमधादिति सायणः । वस्तुतस्तु नाभिर्बन्धुरिति मातापित्रोः साधारणः शब्दः । अत्र दिवि पृथिव्यां वा मम बन्धुर्नाभिः । उभाभ्यामहं बद्धोऽस्मीत्यर्थः । चमूशब्दो गणवाची प्रकृतेः आदित्यानङ्गिरसश्चाह । उत्तान ऊर्ध्वविस्तृतः । व्यानः सूत्रात्मा वान्तरिक्षस्थो योनिः । चन्द्रो वापं योनिः । अत्र सोमेऽन्तरिक्षे वा सूर्य्यः पृथिव्या गर्भं धत्ते ॥

४—स्त्रियामिदं लोहितमग्निरूपमादित्यरूपं पुरुषेऽस्ति रेतः ॥
आत्मानमन्योन्यमभिप्रदाय संभूय चैतौ सृजतोऽत्र जन्तुम् ॥ २७ ॥
एतन्मते द्यौस्तु पिताथ माता पृथ्वीमतोऽस्यामखिलस्य नाभिः ॥
उत्तानचम्वन्तरतोऽस्य योनिस्तथेक्षते दीर्घतमा महर्षिः ॥ २८ ॥
"द्यौर्मे पिता जनिता नाभिरत्र बन्धुर्मे माता पृथिवी महीयम् ॥
उत्तानयोश्चम्वोर्योनिरन्तरत्रा पिता दुहितुर्गर्भमाधात् ॥ २९ ॥

( ऋ. सं. १ मं. १६४ सू. ३३ ऋ. )

द्यौष्ट्वा पिता पृथिवी माता जरा मृत्युं कृणुतां संविदाने ॥
यथा जीवा अदितेरुपस्थे प्राणापानाभ्यां गुपितः शतं हिमाः ॥ ३० ॥

( अथ. २।५।२८।४ )

द्यौः पितः पृथिवि मातरध्रुगग्ने भ्रातर्वसवो मृडता नः ॥
विश्वेदेवा अदिते सजोषा अस्मभ्यं शर्म्म बहुलं वियन्त" ॥ ३१ ॥

## स्थिरचरविमर्शः

१—सूर्यः स्थिरस्तिष्ठति विश्वमध्ये चन्द्रेण साकं भ्रमतीह पृथ्वी ॥
इत्थं महर्षिर्जमदग्निरूचे स वामदेवश्च सवामदेव्यः ॥ ३२ ॥
प्रजा ह तिस्रो अत्यायमीयुर्न्यन्या अर्कमभितो विविश्रे ॥
बृहद्ध तस्थौ भुवनेष्वन्तः पवमानो हरित आविवेश ॥ ३३ ॥

( ऋ. सं. ८ मं. १०१ सू. १४ ऋ. )

अहं परस्तादहमवस्ताद् यदन्तरिक्षं तदु मे पिताऽभूत् ॥
अहं सूर्यमुभयतो ददर्श अहं देवानां परमं गुहा यत् ॥ ३४ ॥
यदेदेनमदधुर्यज्ञियासो दिवि देवाः सूर्यमादितेयम् ॥
यदा चरिष्णू मिथुनावभूतामादित् प्रापश्यन् भुवनानि विश्वा ॥ ३५ ॥

( ऋ. सं. १० मं. ८८ सू. ११ ऋ. )

सोमः पूषा च चेततुर्विश्वासां सुक्षितीनाम् देवत्रा रथ्योर्हिता ॥ ३६ ॥

( सा. सं. पू. २।२ )

अवः परेण परएनाऽवरेण पदा वत्सं बिभ्रती गौरुदस्थात् ॥
सा कद्रीची कंस्विदर्धं परागात् कस्वित् सूते नहियूथे अन्तः ॥ (१।१६४।१७ )
वत्सो रविर्गौः पृथिवी पदं तत्कक्षा विभक्ता विभूतिस्तदुक्तैः ॥
इतः कदाचित् परतः कदाचित् सूर्यं परिक्रामति मध्यमं सा ॥ ३७ ॥
२—द्यावापृथिव्योस्तु यदाह रेणुः स्तम्भं मिथस्तेन गतिर्न पृथ्व्याः ॥
निषिध्यतेऽपि त्वनयोः सदैवान्तरं स्थिरं पश्यति सर्वदिक्षु ॥ ३८ ॥
इन्द्राय गिरो अनिशितसर्गा अपः प्रैरयत् सगरस्य बुध्नात् ॥
यो अक्षेणेव चक्रियौ शचीभिर्विष्वक्तस्तम्भ पृथिवीमुत द्याम् ॥

( ऋ. सं. १० मं. ८९ सू. ४ ऋ. )

एवं पृथिव्याश्च दिवश्च वैश्वामित्रो यदाह स्थिरतां महर्षिः ॥
भूगस्यमार्गस्थिरतामपेक्ष्यैतयोः समानान्तरतां तदाह ॥ ३९ ॥

समान्या * वियुते दूरेअन्ते ध्रुवे पदे तस्थतुर्जागरूके ॥
उत स्वसारा युवती भवन्ती आदु ब्रुवाते मिथुनानि नाम ॥ ४० ॥
( ऋ. मं. ३ मं. ५४ सू. ७ ऋ. )

३—यथा च पृथ्वीं परितोऽनुभ्रमन्तं भूयः परिभ्राम्यति चन्द्रमाः ॥
तथा स्वनाभिं परितोऽटनी सा पृथ्वी च सूर्यश्च परिक्रमेते ॥ ४१ ॥
तस्यैव जात्यन्तरमुपैति नक्षत्रेदेति यस्तिरश्चीन विश्वमध्ये ॥
वयं तु सूर्याभिमुखाः कदाचिद् नुन्या कदाचिद्विमुखा भवामः ॥ ४२ ॥
अहोऽन्तमित्या नु विपर्ययन्ते स्वमेव मन्यन्त इतस्ततस्तम् ॥
रात्रिमधस्ताद्भ्रमते परस्तात् रवौ यथास्थानमयन्तु सूर्यः ॥ ४३ ॥
राज्यन्तमित्या नु विपर्ययन्ते स्वमेव तेनोदितमाहुरेतम् ॥
अहस्त्वधस्ताद्भ्रमते परस्ताद् रात्रिं यथा स्थानमयं तु सूर्यः ॥ ४४ ॥
इत्यैतरेयो भगवानुवाच स्फुटं ततः सिद्ध्यति भूविवर्तः ॥
पृथ्वी विवर्तेत न चेत् तदानीं न स्यादहोरात्रविपर्ययोऽयम् ॥ ४५ ॥
गोपृश्निनाऽदर्शयत चाश्मपृश्निना काण्वायनेनाद्भुतयुक्तिरत्र सा ॥
यथा स्वनाभिं परितो विवर्तते पृथ्वीयमत्र नियतान्तरिक्षगा ॥ ४६ ॥
यद् इन्द्रमवर्धयद्यद्भूमिं व्यवर्तयत् । चक्राण ओपशं दिवि ॥
वावृधानस्य ते वयं विश्वा धनानि जिग्युषः । ऊतिमिन्द्रा वृणीमहे ॥ ४७ ॥
व्यन्तरिक्षमतिरन्मदे सोमस्य रोचना इन्द्रो यदभिनद्वलम् ॥
उद्गा आजदङ्गिरोभ्य आविष्कृण्वन् गुहा सतीः । अर्वाञ्चं नुनुदे वलम् ॥ ४८ ॥

४—विवर्तते यद्दिवं तु पृथ्वी विवर्तते यद्द्वयं च सूर्यः ॥
तथाहनी भिन्नवदेव कल्पे तथा ह्यवोचद् भगवानगस्त्यः ॥ ४९ ॥
कतरा पूर्वा कतरापरायोः कथा जाते कवयः को वि वेद ॥
विश्वं त्मना बिभृतो यद्ध नाम वि वर्तेते अहनी चक्रियेव ॥ ५० ॥
एवं भरद्वाजमहर्षिराद्योऽप्युवाच तं नाम विवर्तवादम् ॥
किन्त्वेष पृथ्व्या अथवार्कपृथ्व्योर्द्वयोरितीदं ह्युभयथैव भाति ॥ ५१ ॥
अहश्च कृष्णमहरर्जुनं च वि वर्तेते रजसी वेद्याभिः ॥
वैश्वानरो जायमानो न राजावातिरज्ज्योतिषाग्निस्तमांसि ॥ ५२ ॥
कृष्णादहर्वा रविरर्जुनाद्द्यावापृथिव्यौ रजसी इमे ते ॥

---

* समान्या इति समानभावापन्ने पृथक् स्थिते विदूरावसानवत्यौ आग्रहत्कर्म्मप्रवणे इमे द्यावापृथिव्यौ स्थिरे अचले स्थाने तस्थतुः । अपि च—तरुण्यौ भगिन्याविवैते भवन्ती । अनन्तरं द्वन्द्वनामभिरुच्येते । उर्वी पृथ्वी बहुले दूरे अन्ते रोदसी पुरोहिते इत्यादीन्युभयोर्द्वन्द्वनामानि ॥ स्वतोऽविरोधात्सरन्ती कुलान्तरं गच्छन्ती स्वसा । एते अप्यन्योन्यतः सरन्त्यौ तथापि मिश्रितामिश्रिते भवन्ती इमे अचले स्थाने तिष्ठत इत्येवं संचरन्त्योरेव नियतान्तरतो योगमनयोः प्रदर्शयन्ति ॥ एतदभिप्रायेणैव चाहुः—समान्यौ वियुते इति । अनेन च संचरन्त्योरनयोः सर्वदा समानान्तरत्वं सूचयन्ति ॥

विवर्तमाने रजसी ततोऽभूत् वैश्वानरोऽग्निः स तमो निहन्ति ॥ ५३ ॥
यद्वा भरद्वाज उवाच पृथ्वी रजोऽहरेकं तदिह द्विधाऽभूत् ॥
शुक्लं च कृष्णं च तदर्द्धमर्द्धं पर्य्यायतो जायत एतदग्रे ॥ ५४ ॥

## पृथ्वीसूर्य्ययोः पौर्वापर्य्यविचारः

१—द्यौः सूर्य्यरूपा तपतीह या वा पृथ्वी प्रतिष्ठा प्रतितिष्ठतीयम् ॥
का तत्र पूर्वा कतरा पराभूदित्थं विपृच्छास्ति विदां समाजे ॥ १ ॥
तत्राग्निहोत्रे किल याज्ञवल्क्यः प्रवक्ति पृथ्वी समभूदिहाद्यः ॥
*प्रजापतिस्तत्र य आस तस्मात् पृथ्वी रसोऽग्रेऽग्निरजायतान्नात् ॥ २ ॥
प्राणः प्रजापत्यभिधोऽग्र आसीत् तत्रान्विता तन्महिमाऽभवद्वाक् ॥
वाचोऽप उत्पाद्य तदप्सुविष्टः पृथ्वीं ससर्जाविरभूदिहाग्निः ॥ ३ ॥
आसीदियं वै पृथिवी तदा काल्वालीकृता नौषधिरत्र पृथ्व्याम् ॥
आसीत्तदानीं न वनस्पतिर्वा प्रजापतिं भोक्तुमगात् ततोऽग्निः ॥ ४ ॥
प्रजापतेर्वाग् महिमा स यः स्वः सोऽत्रापचक्राम ततोऽग्नयेस्मै ॥
इहौषधिः सोऽन्नमभूत् ततो वाग् भूयोपचक्राम स एष सूर्य्यः ॥ ५ ॥
तस्मादयं वायुरभूत् तदित्थं पूर्वं पृथिव्यास ततोऽभवद् द्यौः ॥
बृहस्पतेश्चाप्यदितेर्मतेसौ पूर्वं पृथिव्यास ततोऽभवद् द्यौः ॥ ६ ॥
पुत्रं परस्तात् पितरं स्ववस्तादृषिर्भरद्वाज इहानुषक्ति ॥
तथाग्निपुत्रो वदते स केतुर्वैश्वानराग्नेराविरुद्धवर्ह ॥ ७ ॥

नाहं तन्तुं न विजानाम्योतुं न यं वयन्ति समरेऽतमानाः ॥
कस्य स्वित् पुत्र इह वक्त्वानि परो वदात्यवरेण पित्रा ॥ ८ ॥

[ ऋ. सं. ६ मं. ६ सू. ]

अग्ने नक्षत्रमजरमा सूर्य्यं रोहयो दिवि दधज्ज्योतिर्जनेभ्यः ॥ ९ ॥

[ ऋ. सं. १० । १५६ ]

---

*प्रजापतिर्ह वा इदमग्र एक एवास । सऐक्षत—कथं नु प्रजायेयेति । सोऽश्राम्यत् स तपोऽतप्यत । सोऽग्निमेव मुखाज्जनयांचक्रे । तद् यदेनं मुखादजनयततस्मादन्नादोऽग्निः । स ऐक्षत प्रजापतिः—अन्नादं वा इममात्मनोऽजीजने यदग्निम् । न वा इह मदन्यदन्नमस्ति यं वा अयं नाद्यादिति । काल्वाली कृता हैव तर्हि पृथिव्यास । नौषधय आसुर्न वनस्पतयः । तदेवास्य मनस्यास अथैतमग्निर्व्यात्तेनोपपर्य्यावर्वर्त । तस्य भीतस्य स्वो महिमापचक्राम । वाग् वा अस्य स्वो महिमा वागस्यापचक्राम । स आत्मन्नेवाहुतिमीपे स उदमृष्ट । तत्र विवेद घृताहुतिं वैव पय आहुतिं वा—उभयं हत्वेव तत्पय एव । सा हैनं नाभिराधयांचकार । केशमिश्रेव हास । तां व्यौक्षद् ओषधयेति । तत ओषधयः समभवन् ॥ स द्वितीयमुदमृष्ट तत्रापरामाहुतिं विवेद घृताहुतिं वैव पय आहुतिं वा । सा हैनमभिराधयांचकार । सोऽजुहोत् । तत एष उदियाय य एष तपति । ततोऽयं प्रबभूव—योऽयंपवते । तत एवाग्निः पराङ् पर्य्यावर्वर्त स हुत्वा प्रजापतिः प्र चाजायत—अत्स्यतश्चाग्नेर्मृत्योरात्मानमत्रायत ॥ [ शत. २ कां. २ प्र. २ ब्रा. ]

परे मुवन्तीह पुराभवद् द्यौस्ततः पृथिव्यस्ति यतस्त्रिधाग्निः ॥
तेषामभूदुत्तमतोऽधमाग्निर्यो मध्यमो यः प्रथमः प्रतीतः ॥ १० ॥
आकाशवाय्वग्निजलक्षितीनां क्रमेण सृष्टिं वदतां न पृथ्व्यो ॥
प्राक् सूर्यतः संभवतीति हेतोरग्नेरपां सृष्टिरभूत् ततोऽस्याः ॥ ११ ॥
स भौवनः प्राह तु विश्वकर्मा द्यावापृथिव्यौ सह ते अभूताम् ॥
गर्भे यथा संभवतीह जन्तोर्गार्भीर्यमापादतलं सहैव ॥ १२ ॥
*इमौ सहैवासतुरेतदग्रे लोकौ न तु द्यौः पृथिवी पृथक् स्तः ॥
काले कुतश्चिद् वियतोस्तयोर्योऽन्तरावकाशस्तदिहान्तरिक्षम् ॥ १३ ॥
इत्थं विदुस्तित्तिरयश्च पूर्वं स याज्ञवल्क्यश्च तथा ब्रवीति ॥
तेषां मते लोकमिदं त्रिधाऽभूदियं तथासौ वियदन्तरिक्षम् ॥ १४ ॥
यन्मण्डलं सौरमदोऽस्ति तस्य ग्रहा अनेके परितः क्रमन्ते ॥
पर्य्येति योऽन्त्यो ग्रह एषु तावान्मितः कदाचिद् रविकाय आसीत् ॥ १५ ॥
ज्योतिश्चयात्मा रविरेष तावान् विवर्तमानः स गतेरसाम्यात् ॥
विच्छेदयंस्तीव्रगतिं निजान्त्यस्तरं ग्रहं तेन विनिर्म्ममे स्वम् ॥ १६ ॥
तथैव चार्वाक् च तथैव चार्वाक्—इत्थं ग्रहांस्तान् बहुधा विधाय ॥
गृह्णाति तानात्मभवानिदानीमपि स्वपर्य्यन्तपथप्रचारान् ॥ १७ ॥
अल्पाल्पमात्रत्ववशादमीषां ज्योतिः क्रमाह्रासमगाद् ग्रहाणाम् ॥
आत्यन्तिकाग्निक्षयतस्तु चन्द्रादयः क्रमाद् यान्ति विनाशमन्ते ॥ १८ ॥
इत्थं विदुः केपि सहैककायात् पृथ्वीषु जातास्वचशिष्यतेऽर्कः ॥
आरम्भणानां रजसां सहत्वाद् द्यावापृथिव्योः सह संभवोऽन्यः १९ ॥
"कतरा पूर्वा कतरा पराऽयोः कथा जाते कवयः को विवेद ।
विश्वं त्मना बिभृतो यद्ध नाम विवर्तेते अहनी चक्रियेव ॥२०॥ ऋ. सं. १ मं. १८५ सू. १
इत्थं दुरूहत्वमुवाच पौर्वापर्य्येऽनयोः स्पष्टमृषिस्त्वगस्त्यः ॥
यदत्र सत्यं तदिहास्ति चिन्त्यं न स्वद्य यावद् ध्रियते यथावत् ॥ २१ ॥
अथेतरेऽर्वाञ्च इमे त्विदानीं पश्यन्ति केचित्पुनरन्यथैव ॥
केतुश्च सूर्यश्च मही च चन्द्रः क्रमेण चत्वार इमे भवन्ति ॥ २२ ॥
वियत्यकस्मादयमग्निरेनं सोमं स्वदन् प्रज्वलितिं प्रसह्य ॥
स आहरन् सोममतीव दिग्भ्यः क्रमाज्ज्वलत्पिण्डमधत्त नाभौ ॥ २३ ॥
ज्वालामयः पूर्वमभूत् स केतुर्ज्वालां स कृत्स्नां क्रमशः प्रगृह्य ॥
पिण्डात्मतां याति स भाति सूर्यः सर्वेऽपि केतुप्रभवा हि सूर्याः ॥ २४ ॥
क्रमेण सूर्याग्निरयं ह्रसित्वा क्षारं बहिर्धास्य निधाय काये ॥
अन्तर्भवन् संकुचितक्रमोऽसौ ज्वालां जहातीति भवेदियं भूः ॥ २५ ॥

---

*द्यावापृथिवी सहास्ताम् । ते वियती अब्रूताम्—अस्त्वेव नौ सह यज्ञियमिति । यदस्या यज्ञियमासीत् तदमुष्यामदधात् । तददश्चन्द्रमसि कृष्णम् । ( तै. सं. ५ । २ । ३ तै. ब्रा. १ । १ । ३ ताण्ड्य ब्रा. ७ । १० ) अनया श्रुत्या पृथ्वीचन्द्रयोः सजातत्वं लभ्यते न तु पृथ्वीसूर्य्ययोः । तथाप्यन्यत्र चन्द्रस्यान्तरिक्षवर्तित्वश्रवणादिह पृथ्वीसूर्य्ययोर्वियतोरेव वियत्त्वमभ्युपगच्छन्ति । अथवास्तु चन्द्रपृथिव्योरपि सृष्ट्यादौ सहावस्थानम् ॥

सोमोऽन्तरे यत्र बहिश्चरोऽग्निर्भास्वान् स सूर्य्यस्तपतीममश्नन् ॥
सोमो बहिर्वाऽन्तरतोऽग्निरस्याः पृथ्व्या अतेजस्विनि पार्थिवे च ॥ २६ ॥
यत्र त्वमुष्याः क्रमशः पृथिव्याः कृत्स्नोऽपि सोऽग्निः क्षयमाससाद ॥
विनिःसृताग्निः स तदैव चन्द्रो विशुद्धसोमात्मक उद्बभूव ॥ २७ ॥
चन्द्रस्य चान्ये परितः क्रमन्ते गन्धर्वसंज्ञा अपि ताननूल्काः ॥
नेक्षा प्रदृश्यन्त इति स्म हेतोरेतद्द्वयं नात्र विशिष्य वच्मि ॥ २८ ॥
गन्धर्वतामेत् तु कदाचिदुल्का गन्धर्व आसीदपि जातु चन्द्रः ॥
य एष चन्द्रः परितः पृथिव्याः पर्य्येति पूर्वं पृथिवीयमासीत् ॥ २९ ॥
इयं तु पृथ्वी द्युमणिः पुरासीत् सूर्य्यस्तु केतुः स कदाचिदासीत् ॥
ये केतवः सन्ति त एव काले सूर्य्या भविष्यन्ति परे परेऽपि ॥ ३० ॥
केतुस्त्वकस्मात् स्वयमेव भूत्वा कालेन सूर्य्यं सृजति क्षितिश्च ॥
चन्द्रः क्रमादग्निनिरस्तकायः क्षीणोऽप्यदृश्योऽपि विलीयते खे ॥ ३१ ॥
सूर्य्योऽग्निहेतोः पृथुलोऽस्ति पिण्डः पृथ्वी ततोऽल्पास्ति ततोऽपि चन्द्रः ॥
खर्वस्ततोऽप्यल्पवृक्षकायाः क्षीणक्रमा यान्ति निपातमुल्काः ॥ ३२ ॥
अग्निस्त्वहोरात्रिरयं तु सोमस्तयोर्मिथः संगतयोर्वलेन ॥
पर्य्यायतोऽन्तस्त्वबहिष्ट्वयोगाच्चत्वार एते प्रभवन्ति भावाः ॥ ३३ ॥
चिरेण पर्य्यायमुपेत्य सोऽयं सृष्टिक्रमः संसवते चतुष्पात् ॥
सृष्टिक्रमाणां तु चतुष्पदां स्याद्देशेऽपि कालेऽपि बहुत्वमेषाम् ॥ ३४ ॥

इति पृथ्वीसूर्य्ययोः पौर्वापर्य्यम् ॥

## द्यावापृथिव्योः स्वरूपम् ॥

द्यौः कोऽर्थ इत्यत्र मतद्वयं स्यात् प्राधान्यतस्तत्र च केचिदाहुः ॥
सूर्य्येन्दुताराग्रहसंकुलाङ्गं यद् दृश्यते व्योम तदस्ति सा द्यौः ॥ १ ॥
द्यौरेव संवत्सर उच्यते रवेर्यावान् प्रकाशः परितः प्रवर्तते ॥
तद्देवचक्रं सकला हि देवता मिथोऽन्वयादत्र किलैकतां गताः ॥ २ ॥
संवत्सरो देवसमुच्चयोऽथवा गावोऽथवा सर्वरसप्रदोहनाः ॥
द्यौरुच्यते व्योम तु लक्षितं हि तैस्ततो हि गोदेवकुलप्रवृत्तयः ॥ ३ ॥
यावत्तु सूर्य्येण विभास्यते तद् ब्रह्माण्डमेतस्य कपालमर्द्धम् ॥
ऊर्द्ध्वार्कभक्तं दिवमाहुरर्द्धं कपालमुर्वीघटितं तु पृथ्वी ॥ ४ ॥
* पृथ्वीयमेका बहुलेव तां प्रत्युद्यामिनी द्यौश्च तथान्तरिक्षम् ॥
यथान्तरिक्षं खलु लेलयेव प्रतीयते तद्वदियं मता द्यौः ॥ ५ ॥ शतः २।१।२।१६
तैः सूर्य्यचन्द्रोडुगणा अवस्ताल्लक्ष्मास्ति यस्याः प्रवदामि तां द्याम् ॥
पृथ्वीं तु यस्या उपरिस्थ लक्ष्मापोऽग्निः प्रजा ओषधयो वनानि ॥ ६ ॥
शतः १ । २ । २
सूर्य्योऽप्यमुधन्नभिधावति द्यामस्तं स यन् धावति चाभिपृथ्वीम् ॥
वृत्तार्द्धवद् द्यौरिह दृश्यतेऽसौ पृथ्वी समा दर्शतलानुकारा ॥ ७ ॥
शतः १ कां. २ प्र. २ ब्रा.

* बहुलेव वा इयं पृथिवी । लेलयेवान्तरिक्षं लेलयेवासौ द्यौः । उभे चिदेनां प्रत्युद्यामि-नीस्तामिति ॥ ( शत. २।१।२।१६ )

* सूर्यस्तु न द्यौः स हि मध्यतस्तान् लोकान् विवृण्वन् वृणुते दिशश्च ॥
इत्याहवत्सार महर्षिरेवं बृहस्पतिर्वा नकुलोऽप्यवोचत् ॥ ८ ॥
ब्रह्म जज्ञानं प्रथमं पुरस्ताद् वि सीमतः सुरुचो वेन आवः ॥
स बुध्न्या उपमा अस्य विष्ठाः सतश्च योनिमसतश्च विवः ॥ ९ ॥
( य. सं. १३।१ ) सा. सं. ४।३।१। अथर्व. सं. ४।१।१ शत. ५।२।६
पृथ्वी च सा द्यौश्च यथेह रूपं विधाय सर्गं कुरुते समग्रम् ॥
तत् काश्यपं रूपमतस्तमाहुः कूर्मं प्रजापत्यवतार एषः ॥ १० ॥
द्यौः कश्यपस्योर्ध्वकपालमस्यैवाधः कपालं पृथिवी तदित्थम् ॥
द्यावापृथिव्यः स हि कूर्म उक्तः प्रजापतिः कश्यपरूप एकः ॥ ११ ॥
सर्वं जगत् कश्यपतः प्रजातं स कश्यपो द्यौः सहिता पृथिव्या ॥
रसप्रदो द्यौः स पिताऽथ माता योनिः पृथिव्यस्ति ततोस्ति सृष्टिः ॥१२॥
२ मतान्तरे व्योम न केवलं द्यौस्तच्चानिरुक्तं तदिहान्तरिक्षम् ॥
पृथ्वीव सा द्यौश्च निरुक्तरूपात्कल्पते मूर्तिमतो प्रकाश्या ॥ १३ ॥
येयं प्रतिष्ठा पृथिवी मता सा यः सूर्य एषोऽस्ति दिवं तमाहुः ॥
द्यौरस्त्यहो रात्रिरियं तु पृथ्वी मध्ये तयोः सान्ध्यमिवान्तरिक्षम् ॥ १४ ॥

## द्यावापृथिव्योरसाभ्यां शरीरात्मानः ॥

येयं पृथिव्यस्ति जगत् प्रतिष्ठा वृत्तानुकाराऽखिलभूतयोनिः ॥
सात्री तथाद्या च दिवोऽथ सा द्यौरत्री तथा द्या च भवेत् पृथिव्याः ॥ १५ ॥
सोमोऽयमन्यः स मतोऽन्तरिक्षे ततोऽन्यदग्निद्वयमेतदस्ति ॥
सोमोऽयमन्नं जनयत्यथैते त्रयोऽग्नयोऽन्नाद इति ब्रुवन्ति ॥ १६ ॥
प्रत्येकमग्निं द्विविधं प्रतीयाच्चित्यं तथा तत्र चिते निधेयम् ॥
रयिर्वपुश्चित्यमिदं यदिर्वा प्राणोऽयमात्माऽन्तरतो निधेयः ॥ १७ ॥
चित्यो यथाधिक्षितिभूतसंघश्चित्यस्तथा दिव्यपि देवसंघः ॥
प्राणो निधेयस्तु चिते स भूमावग्निः प्रसिद्धः स दिवीन्द्र उक्तः ॥ १८ ॥
चित्योऽन्तरिक्षेऽस्ति च वायुरन्यः स स्पर्शलक्ष्यो मृद्वग्नियोग्यः ॥
चिते निधेयः पुनरन्यवायुः प्राणोऽक्षसृजन् सोऽखिलदेवयोग्यः ॥ १९ ॥
प्रज्ञामयः प्राण इहोभयास्मिन् सोऽन्योन्य आत्मास्ति दिवो भुवश्च ॥
दिव्यात्मनो दैविकमस्ति देहं भौमात्मनो भौतिकमेतदाहुः ॥ २० ॥
आकाशवाय्वग्निजलानि मृत्सा पञ्चेह भूतानि भवन्ति पृथ्व्याम् ॥
एकैकभेदे च भवन्ति भेदा नाना विधास्तैर्निचितास्ति पृथ्वी ॥ २१ ॥
तथाग्निवाय्विन्द्रदिगिन्द्रभेदात् पञ्चैव देवा दिवि संनिविष्टाः ॥
एकैकभेदे च भवन्ति भेदा नानाविधास्तैर्निचितास्त्यसौ द्यौः ॥ २२ ॥
चिते निधेयेन सहैष चित्यो दिव्यश्च भौमश्च परस्परेण ॥
संसृज्य सत्त्वं सृजतस्ततोस्मिन् आत्मद्वयं भाति वपुर्द्वयं च ॥ २३ ॥

---

* अवस्ताद्धि दिव आदित्यः—इति श्रुतेः सूर्याद् भिद्यते द्यौः ॥ शत ६।२।३।२।

द्यावा पृथिव्योर्यदिदं निरुक्तं तथान्तरीक्ष्यं पुनरत्र विद्यात् ॥
आत्मा शरीरं च यदन्तरिक्षाद् वायव्यमध्यात्ममिदं प्रतीयात् ॥ २४ ॥
तौ प्रक्रमैः पञ्चभिरत्र विग्रहे स्यातां नियुक्तौ द्युरसावनीरसौ ॥
पश्यास्यधिष्ठातृपवित्रजीवनाधियज्ञसाधारणभेदतो हितौ ॥ २५ ॥

## मूलं हंसः शिव इति वैशेषिकात्मतन्त्रम् ॥

तथा ह्यधिष्ठातृतयात्र विग्रहे स्यातां यथा तौ नु तथा ब्रवीम्यहम् ॥
आजन्मसिद्धावपि कालतः क्रमादुपेत्य पोषं प्रतितिष्ठतो दृढम् ॥ १ ॥
मूलं शिवश्चेह निजं निजं तनौ तन्त्रं विनिर्वाहयतः पृथक् पृथक् ॥
एकैकतन्त्रे च पृथक् पृथक् पुनस्तन्त्राण्यनेकानि वितत्य रक्षतः ॥ २ ॥
मूलं स आत्मास्ति शिवः स आत्मा कलेवरे भौतिकदैविके द्वे ॥
यद्भौतिकं तत्र तु मूलमाहुः शिवोऽधितिष्ठत्यपि दैविकं तत् ॥ ३ ॥
पृथ्वीबलं मूलमिहास्य देहे स्याद् ब्रह्मग्रन्थिः परमा प्रतिष्ठा ॥
तं ब्रह्मग्रन्थिं प्रवदन्ति मूलाधारं ततः प्रस्फुरतीदमङ्गे ॥ ४ ॥
स्वाधारगं कुण्डलितं तु मूलं विद्युद्रसूत्रं विसतन्तुसूक्ष्मम् ॥
व्यामार्द्धमात्रं तत एव भौमं बलं शिरोऽन्ते क्रमते शरीरे ॥ ५ ॥
योगादृते नास्ति तु कुण्डलिन्याः संचार ऊर्ध्वं हि तथापि तस्याः ॥
उद्धूय सूर्य्यांशुवदंशवोऽस्मिन् देहे शिरोऽन्तेऽस्ति स देहपालः ॥ ६ ॥
यावन्त एतेह शरीरयष्टौ शारीरका धातव उल्लसन्ति ॥
ते मूलमालम्ब्य समे स्थिताः स्युर्नाशं लभेरन् यदि मूलनाशः ॥ ७ ॥
सौरो रसो यः स शिवः प्रसिद्धो मस्तिष्कमेतस्य परा प्रतिष्ठा ॥
मस्तिष्कमाहुस्तु सहस्रपद्मं तदन्तरे ज्ञानमयः शिवात्मा ॥ ८ ॥
योगादृते नैष शिवो विचाली तस्यांशवः सर्वशरीरयष्टौ ॥
व्याप्ता अपि स्नायुभिरेव तेभ्यो ज्ञानं तनौ पादतलान्तमस्ति ॥ ९ ॥
अन्ये तु मूलस्य शिवस्य च स्वस्थानस्थितस्यैव विसारमाहुः ॥
वर्तिस्थदीपस्य यथार्चिरेवं देहे कियद्देशमिमे क्रमेते ॥ १० ॥
पृथ्वीरसः प्राक् प्रपदात् प्रविश्यते स ब्रह्मग्रन्थेर्हृदयान्तमास्थितः ॥
केशान्तमार्गाद् द्युरसः प्रविश्यते स ब्रह्मरन्ध्राद् हृदयान्तमास्थितः ॥ ११ ॥
प्रपद्य देहं प्रपदद्वयेनोदसर्पदूर्ध्वं भवतस्तदूरू ॥
अथोदरं तत् तदुरोऽभवच्च क्रमादुरु ब्रह्म तदित्थमासीत् ॥ १२ ॥
तत्रोदरं ब्रह्म तु शार्कराक्ष्या उपासतेऽथारुणयो हृदेतत् ॥
ब्रह्मैव मन्ये हृदयोदरे ते स्थित्वेह वेवेष्ट्यखिलं शरीरम् ॥ १३ ॥
यद्वा रसोऽस्याः प्रपदाच्छरीरे प्रविश्य मूर्द्धानमुपैति सद्यः ॥
सोऽर्वाक् क्रमात् संभरणं प्रकुर्वन् संवत्सरेण प्रपदे स्थितः स्यात् ॥ १४ ॥
ततः शिशुः प्राग् बलमेति शीर्ष्णा कस्यां बलेनोपविशत्यथायम् ॥
कालेन पादे बलमेष लब्ध्वा प्रोत्थाय भूयश्चरतीति केचित् ॥ १५ ॥
इर भवेदन्नरसः शरीरं हीरामयं तेन हिरण्मयं तत् ॥
भूगर्भतोऽग्निः प्रतिपद्य तस्मिन् संवत्सरेण प्रतितिष्ठतीह ॥ १६ ॥

अथो रविः शीर्षकपालमध्ये केशान्तरन्ध्रे वपुरूर्ध्वसीम्नि ॥
प्रविश्य तालुस्तनमेत्य भौमप्राणेन योगं हृदयेऽभ्युपैति ॥ १७ ॥
सोमात्मनः षोडशभिस्तु वर्षैर्लब्ध्वा कलाः षोडश षोडशि स्यात् ॥
तथा च पूर्णे मनसि प्रतिष्ठामुपैति सूर्य्योपि स षोडशाब्दैः ॥ १८ ॥
आभ्यां तृतीयोऽस्ति च हंस आत्मा हृत्पद्ममेतस्य परा प्रतिष्ठा ॥
तदन्तरे यद्दहरं वियत् तद्धामास्ति हंसस्य परं त्रिधातुः ॥ १९ ॥
यथात्र मूलं स यथा शिवोऽयं तथैव हंसोपि सहास्त आत्मा ॥
मूलं शिवो हंस इति त्रयस्ते त्रैलोक्यनाथाः सह चैक आत्मा ॥ २० ॥
आदाय चादाय दिवः पृथिव्या रसानयं मिश्रयते मिथस्तान् ॥
न्यूनातिरेकोपगमात् पृथग्वत् स देहधातून् विदधाति हंसः ॥ २१ ॥
त्वगसृङ्मांसानि वपादिमेदोऽस्थिमज्जशुक्राणि च भूरसात्स्युः ॥
नाडीशिरस्नायव एषु शाखा संस्थानवर्णाश्च दिवोरसात् स्युः ॥ २२ ॥
दशेन्द्रियाणीन्द्रियशक्तिमूलं मस्तिष्कपिण्डश्च दिवोरस त् स्युः ॥
तदिन्द्रियाद्यायतनानि भूतोत्थानि सर्वाणि भुवो रसात् स्युः ॥ २३ ॥
यावत्य एवेह शरीरयष्टौ चेष्टाः क्रियाः काश्च बलं च किञ्चित् ॥
हंसस्य चायत्तमिदं समग्रं हंसे गते सर्वमिदं गतं स्यात् ॥ २४ ॥
एषां त्रयाणामपि तत्र तत्रैतस्मिन् शरीरे स्थितिहेतवः स्युः ॥
त्रयस्त एवेह सहोदितानामेकव्यपाये त्रितयं व्यपैति ॥ २५ ॥
तत्रापि हंसः प्रथमः प्रधानं मूलं तदन्वक् स शिवस्तदन्वक् ॥
हंसस्तु मातुर्जठराग्निनायं कृतं हृदाकारमनूदितः स्यात् ॥ २६ ॥
त्रीनप्यमूनेव विशिष्य देवांस्त्रैलोक्यनाथान् प्रतिपादयन्ति ॥
सर्वेऽपि वेदा अत एवमन्ये कश्चिन्महर्षिः कश्चिन्महर्षिः कचिद्वैवमाह ॥ २७ ॥

ये अर्वाङ् उत वा पुराणे वेदं विद्वांसमभितो वदन्ति ॥
आदित्यमेव ते परिवदन्ति सर्वे अग्निं द्वितीयं तृतीयं च हंसम् ॥ २८ ॥

## अपानः व्यानः प्राण इति—पवित्रात्मतन्त्रम्

अथो पवित्रं प्रतिपादयामस्तच्चेह देहे पवते वहिर्वत् ॥
यावत् पवित्रं पवतेऽत्र तावन्न पूयते मूत्रमलामयाद्यः ॥ १ ॥
यथा सुपक्वे कच पिप्पले रसोऽनुरक्त आभाति सुचर्मकोमले ॥
तथाग्निपाकेन रसोऽसृगस्त्यसौ चिरं स्थिरो येन पवित्रमस्ति तत् ॥२॥
आदित्यतः प्राण उदेति वायुर्भवेदपानः पृथिवीरसेन ॥
तयोस्तु योगो हृदि यत्र तत्र व्यानोऽन्तरिक्षात् स्वयमभ्युपैति ॥ ३ ॥
प्राणः स उत्क्रामति यो हृदूर्ध्वं योऽवाङ् हृदः क्रामति सोऽस्त्यपानः ॥
एतौ गृहीतौ खलु येन सन्धिर्व्यानः स सन्धायक एतयोः सः ॥ ४ ॥
नाड्यः शतं स्युः प्रतिनाडि ताः शतं पुनः सहस्राणि भवन्ति तास्वपि ॥
द्वासप्ततिस्तेन भवन्ति कोट्यो द्वासप्ततिर्व्यान इहावतिष्ठते ॥ ५ ॥
न प्राणतो वायमपानतो वा जीवेद् यदि व्यान इहैष न स्यात् ॥
प्राणोऽप्यपानोऽप्यमुनैव योगात् स्तब्धो रसानेति दिवो भुवश्च ॥ ६ ॥

अयं पवित्रं पवतेऽत्र योऽयं स एकवद्धै पवते यदिर्ग्रो ॥
अन्तःप्रविष्टः पुरुषे तु स प्राङ् प्रत्यङ् च तस्माद् भवतः पुनर्द्वौ ॥ ७ ॥
का॰ प्र. ब्रा. कं.
(शत॰ १ । १ । ३ । २)
„ १ । ७ । १ । १२

य एति सूर्य्यं हृदयान्तमेष प्राणः प्रयन् सूर्य्यमुदान एषः ॥
शत॰ १। ३। ३। ५

पीताशितं यो गिलतीह येनोच्चरत्ययं प्राण उदानवृत्तिः ॥ ८ ॥
य एति भूमेर्हृदयान्तमेतं समानमाहुर्भुवमन्वपानः ॥
बहिःस्थपिष्टं तदणिष्ठमङ्गे भुक्तस्य धातुं कुरुते समानः ॥ ९ ॥
प्राणोऽप्युदानो रविरश्मिवृत्ती अग्नेरपानश्च समान एषः ॥
व्याने तयोर्यावदियं धृतिः स्यात् प्राणेन विष्टब्धमिदं च तावत् ॥ १० ॥
मैत्रिश्रुतावित्थमुवाच शाकायन्यो महर्षिर्मरुते नृपाय ॥
अपानतोऽन्नं भ्रियते शरीरे त्वित्यैतरेयो भगवानुवाच ॥ ११ ॥
प्राणस्त्वपानो भवतीव सोऽङ्गुल्यग्रेभ्य आसं चरतीह तद्वत् ॥
विपर्य्ययात् प्राणमयस्तु सोऽङ्गुल्यग्रेभ्य आसं चरति ह्यपानः ॥ १२ ॥
तौ संहितौ तौ भवतश्च संततौ व्यानोऽप्युदानोऽपि तथैव पर्य्ययात् ॥
सुसंहितौ संभवतश्च संततावित्याह चित्यामिह याज्ञवल्क्यकः ॥ १३ ॥
प्राणोऽस्त्युपांशुग्रह एवमन्तर्यामग्रहोऽपान इमौ तृतीयम् ॥
व्यानं तु नोपांशु सवं जहीतः सोऽग्निर्ह्युपांशुः सपरोऽत्र सोमः ॥ १४ ॥
परामवत्येष उपांशुरन्तर्य्यामं तथा तं स विपर्य्ययेण ॥
परस्परामर्द्दनतोऽन्तरात् तावौष्ण्यं सुधाते स शरीरगोऽग्निः ॥ १५ ॥

## वैश्वानरः तैजस प्राज्ञः इति–प्रत्युत्पन्नात्मतन्त्रम्

यः प्रक्रमोऽन्यो यत एव देहे प्रातिस्विकात्मान इहोदयन्ते ॥
सचेतनाचेतनयोर्व्यवस्था यतस्तमत्र प्रतिपादयामि ॥ १ ॥
अचेतने वाऽस्फुटचेतने वा सचेतने वा निखिलेपि सत्त्वे ॥
पृथ्वीरसेन द्युरसोऽनुगम्य त्वात्मानमेकं सृजति क्रियोगात् ॥ २ ॥
द्यावापृथिव्योरसयोस्तु योगे पात्रं रसोऽस्याद्युरसो निधेयः ॥
दिवो रसे पात्रमिते स आत्मा वैश्वानरप्राण उदेति देही ॥ ३ ॥
पृथ्वीं तु विश्वं पृथिवी रसो नरो द्यौर्विश्वमेवं द्युरसो नरः परः ॥
विश्वानराभ्यामितरेतरान्वयादभूत् स वैश्वानर उच्यते ततः ॥ ४ ॥
अथान्तरीक्षेऽपि रसोऽत्र वायुः पात्रं द्वितीयं भुवि संनिधत्ते ॥
भूपात्रतश्चेद् द्युरसोऽधिकः स्यात् स तैजसः स्यात् परपात्रमात्रः ॥ ५ ॥
ततोऽपि यत्र द्युरसोऽधिकः स्यात् प्राज्ञः स इन्द्रो ध्रियतेऽन्य आत्मा ॥
इत्थं त्रिधात्मा स्त्रि त्रिभिः स संज्ञा द्वाभ्यां द्रुमा धातव एकतः स्युः ॥ ६ ॥
तेजो रविप्राणरसः स वर्द्धते स वर्द्धितस्तैजस उच्यते ततः ॥

प्रज्ञा रवेरेव मनोरसः स च प्रवर्द्धते प्रज्ञमिमं ततो विदुः ॥ ७ ॥
दिवो रसे भूरसवच्च संहितान्येकत्रवाक् प्राणमनांसि चक्षते ॥
स्वजातिसंसर्गवशात् त्रयोऽप्यमी वैश्वानराद्याः स्युरिदं मतं परम् ॥८॥
वैश्वानरः पार्थिव एव दिव्यः प्रज्ञस्तथा तैजस आन्तरीक्ष्यः ॥
त्रैलोक्यसंभूतविभिन्नपात्रप्रमाणतस्ते त्रय उद्भवन्ति ॥ ६ ॥
दिव्यं मनः प्राण इहान्तरीक्ष्यो वाक् पार्थिवी तित्तिरिभिर्निरुक्ते ॥
तेषां च संयोगवशादिमेस्युस्तस्मात् तथैतेऽत्र मतान्तरेऽपि ॥ १० ॥
वैश्वानरोऽसौ पुरुषः शरीरं व्याप्नोति चालोमनखाग्रदेशम् ॥
अनाहतः शब्द इहास्य घोषो विपच्यते तेन च भुक्तमन्नम् ॥ ११ ॥
मैत्रिश्रुतावित्थमुवाच शाकायन्यो महर्षिर्मरुते नृपाय ॥
आदित्यतो जायत एष वैश्वानरस्तथोवाच च शाकपूणिः ॥ १२ ॥
विस्रंसमानोऽग्निरिवान्नमाहुतं धत्ते ततोऽस्मिन् प्रतिधीयते पुनः ॥
विस्रंसितो भौमरसः स दिव्यतो रसात् समायुज्य परोऽग्निरुद्भवेत् १३
तथैव देहेपि यदन्नमाहितं वैश्वानरस्य प्रतिधीयते ततः ॥
विस्रंसितो भौमरसः स दिव्यतः संयुज्य वैश्वानर एव जायते ॥ १४ ॥
सहस्रशीर्षा स सहस्रनेत्रः सहस्रपादः पुरुषोऽयमग्निः ॥
वैश्वानरो व्याप्य वपुःसमन्तात् प्रादेशमात्रेण पृथक् पृथक् स्यात् ॥१५॥
वैश्वानरं चाश्वपतिर्नृपः प्राक् ताण्ड्यश्रुतेस्तूपनिषद्युवाच ॥
तं याज्ञवल्क्यो दशमेतु काण्डेऽध्याये च षष्ठेऽचकथत् तथैव ॥ १६ ॥
१६। १०। ६।

अश्मत्रयेऽप्यत्र दिवो रसास्ते स्युस्तारतम्येन युतानि सर्गात् ॥
तत्तारतम्यात् प्रतिकक्षमेषां नाना विभागा बहुधा भवन्ति ॥ १७ ॥
काचाभ्रमुक्ताफलवज्रनीलमाणिक्यगारुत्मतपुष्परागाः ॥
अयश्च शुल्वं रजतं हिरण्यं तालादयोऽचेतनवर्गगाः स्युः ॥ १८ ॥
स्तम्बाव्रतत्योऽप्युलपाः क्षुपा वा तृणौषधी वृक्षगणा द्वितीये ॥
प्ररोहिणोऽप्रस्फुटचेतनास्ते वैश्वानरस्तैजस एषु चात्मा ॥ १६ ॥
अथो तृतीये क्रमयस्त्वपादाभूलग्नमापुच्छमुखं तदङ्गम् ॥
स्थानं त्यजन्त्येव चलन्त्य एता दृढं न भूम्या अगवद् गृहीताः ॥ २० ॥
यथा यथैषां द्युरसा विवृद्धास्तथैषु भूकर्षबलं ह्रसत् स्यात् ॥
ऊर्ध्वं भुवस्तिष्ठति देहमत्र स्कम्भा इवापुच्छमुखं तु पादाः ॥ २१ ॥
ततोपि वृद्धे द्युरसे लघुत्वान्मध्ये तनोः स्युर्बहवस्तु पादाः ॥
अष्टापदाः षट्पदपक्षिणः स्युश्चतुष्पदाः पक्षिगणा द्विपादाः ॥ २२ ॥
पृथ्वीविलग्नं तु शिरः क्रिमेः क्रमादूर्ध्वं भुवः कीटशिरोवतिष्ठते ॥
पशोः शिरः पुच्छसमं पतत्रिणां पुच्छाच्छिरः साधु तिरः समुन्नतम् ॥२३॥
पशुर्मनुष्योऽस्ति तथापि तच्छिरो धत्ते विशिष्य द्युरसं ततः सदा ॥
विरुद्धदिक्स्थं भवति क्षितेरिदं द्युसंमुखं तस्य न पुच्छमुद्गतम् ॥ २४ ॥
इन्द्रातिशय्याच्च मनुष्यवागियं विज्ञानसंपन्नतमाऽक्षरान्विता ॥
विद्यां च वैज्ञानिक एष वेदयन् शास्त्रं हि निर्माति परोक्षमीक्षते ॥ २५ ॥

ततोऽपि वृद्धे घुरसे लघुत्वादस्कम्भपादा बहवोऽन्तरिक्षे ॥
जीवाः परे देवनिकायसंज्ञा अभूनलस्पृष्टपदा वसन्ति ॥ २६ ॥
ते चावरे द्वादशयोजनान्ताः परिसवे चन्द्रमसः परे स्युः ॥
परे रविज्योतिषि येतु सूर्ये तान् ब्रह्मसंज्ञान् परमान् वदन्ति ॥ २७ ॥
कृमिं समारभ्य नरान्तजीवे क्रमेण बुद्धीन्द्रियशक्तिवृद्धिः ॥
नरे स्युरेकादश चेन्द्रियाणि ज्ञानक्रियाशक्तिविशेषकाणि ॥ २८ ॥
देवेषु तेभ्योऽप्यधिकास्तु शक्तयः प्रादुर्भवेयुः सहजाः स्वभावतः ॥
ता अष्टसिद्धीर्नव तुष्टिसंहिताः शक्तीः पुराणाः कपिलादयो विदुः ॥२९॥
देवा इमे यद्यपि सन्त्यदृश्यास्तथापि नो सन्ति न तेऽन्तरिक्षे ।
चिरादिहाद्यावधि नूनमेषां क्वचित् क्वचित् प्रत्ययमावहन्ति ॥ ३० ॥
पुरायुगे काप्यमहर्षिकन्या बभूव गन्धर्वधृता हि माद्री ॥
बालापि विज्ञानविशिष्टमर्थं प्रोवाच साऽऽविष्टपरात्मयोगात् ॥ ३१ ॥
अद्यापि कुत्रापि नितान्तबालो बालाप्ययोग्या बहुशः प्रवक्ति ॥
वैज्ञानिकं चाप्यतदर्हमन्यं चार्थं क्वचित् तत्परमं प्रमाणम् ॥ ३२ ॥
सन्त्यम्बुबिन्दौ शतशस्तु कीटाः सन्त्यग्निहेतावपि कीटसंघाः ॥
साधारणा न प्रतियन्ति तांस्तान् वैज्ञानिकाः किन्तु विलोकयन्ति ॥ ३३ ॥
तथैव देवा अपि सन्त्यदृश्याः परीक्षया ते बहुशोऽनुभूताः ॥
ये तत्र न प्रत्ययमावहन्ति बाला हि ते ज्ञानकलास्वयोग्याः ॥ ३४ ॥
सिद्धर्षयस्ते कपिलादयः स्वे सांख्ये विदुः सत्त्वविशालसर्गान् ॥
अष्टप्रकारानपि चन्द्रलोकाधस्तात् परस्ताच्च सतुष्टिसिद्धीन् ॥ ३५ ॥
ससुश्रुतोऽसौ चरकश्च देहेऽन्यस्यात्मनोऽन्यस्य गतिं विचष्टे ॥
ग्रहांश्च तानाहुरिमे यथार्थं ब्रुवन्ति तत्सत्त्वमतः प्रतीयात् ॥ ३६ ॥
स्तम्बादयो ब्रह्मपरा य एते शरीरिणो जन्ममृती भजन्ते ॥
ऊर्ध्वाधराः कर्मवशादमीषां विपर्य्यया योनिगतौ मिथः स्युः ॥ ३७ ॥
द्यावापृथिव्यो रसयोस्तु बन्धादात्मान आमोक्षमिमे स्थिराः स्युः ॥
ते च प्रविष्टा मृतिजन्मचक्रे भवन्ति नानाविधयोनिभुक्ताः ॥ ३८ ॥
पृथ्वी च सा द्यौश्च यतोग्निराग्निस्तस्मादिमे द्वे अहनी तथापि ॥
कृष्णा मही रात्रिरहः सिता द्यौः सर्वोऽप्यहोरात्रगतस्ततोऽभूत् ॥ ३९ ॥

## अन्नम्, ऊर्क्, प्राण—इति यज्ञात्मतन्त्रम्

प्रत्यर्थमौष्ण्यं परितोऽनुभूयते तस्माद् ध्रुवं तेष्वखिलेषु तेऽग्नयः ॥
नाग्निर्विनाघातमतोऽनुभीयते लोष्टेपि लोकद्वयतो रसौ चितौ ॥ १ ॥
औष्ण्यं हि वैश्वानरतोस्ति देहे वैश्वानरो यज्ञमयः स यज्ञः ॥
अस्त्यग्निसोमान्वयरूप इत्थं प्रत्यर्थमन्नादकृतोऽत्र भोगः ॥ २ ॥
न प्राणविस्रंसनमस्ति यस्मिन् नान्नग्रहायास्य कदापि कामः ॥
अनाहुतेऽन्ने तु न यज्ञसिद्धिर्यज्ञं विना नाग्निरयं न चौष्ण्यम् ॥ ३ ॥
प्राणादपानाच्च मिथोऽनुघर्षाद्वैश्वानरोऽग्निर्भवतीह देही ॥
वैश्वानरो यज्ञ इहोपसन्ना देवा युतास्तैजसवायुरुक्थः ॥ ४ ॥

स तैजसो वायुरयं प्रपुष्टो मध्ये दधातीन्द्रमिदं हशं यत् ॥
प्राणं तमाहुस्तत एव देहे चैतन्यमायाति स एष आत्मा ॥ ५ ॥
स वाङ्मयः प्राणमयो मनोमयो वैश्वानरस्तैजस इन्द्र एष यः ॥
त्रयः स आत्माऽव्यतिरिक्त एककः स च द्विधा व्यष्टिसमष्टिभेदतः ॥ ६ ॥
विस्रंसते प्राण इह स्वभावतः प्राणे गते क्लिश्यति तत्सितं मनः ॥
प्राणं पुनः स्रष्टुमिदं तु वाध्ययं पीतासितं कामयतेऽत्र माहृतम् ॥ ७ ॥
प्राणो द्विधा व्याप्रियते स केनचिद्भागेन विस्रस्य परेण युज्यते ॥
अन्नं समाहारयते तु केनचिद्भागेन सोऽन्नं परिगृह्य तिष्ठति ॥ ८ ॥
गृहीतमन्नं द्विविधं प्रवर्तते प्राणस्तदुत्सादितसंमितं भवेत् ॥
प्राणं तु विस्रस्तमनेन पूरयेद् भूयोऽत्र चास्मिन् जनयेद् विशेषिताम् ॥ ९ ॥
अन्नं भवेद्रुग्मियमूर्क् तु सद्यः प्राणो भवेत् प्राण इहेतरे द्वे ॥
ऊर्क् चेतरे अन्नमपीतरौ द्वौ धत्ते मिथः संग्रह एष यहः ॥ १० ॥
वैश्वानरेऽन्यः स च तैजसेऽन्यः प्राणे च सोन्यः स च चित्यतोऽन्यः ॥
चिते निधेयेऽन्य इहाहुतेः स्यान्न सोऽस्ति यो यज्ञ इहैव न स्यात् ॥ ११ ॥
वैशेषिकात्माथ पवित्रमात्मा संजीवनात्मा स च यज्ञ एतान् ॥
छन्दांसि मन्ये वयसां चरत्वाच्छन्दः स्थिरं यच्च इहैव न स्यात् ॥ १२ ॥

## अग्निवायुरिन्द्र इति—साधारणात्मतन्त्रम्

आत्मत्रयाघातवशादपूर्वास्त्रयो य आत्मा न इहोद्भवन्ति ॥
वैश्वानराद्याः प्रतिदेहमेते भिन्नाः शरीरेण सहाप्ययन्ति ॥ १ ॥
ते चाग्निवाय्विन्द्रमयाः शरीरं गृह्णन्ति चालोमनखाग्रदेशम् ॥
सत्याग्निवाय्विन्द्रकलास्ततोऽन्याः साधारणाः काश्चिदिहेति मन्ये ॥ २ ॥
आकर्षिता येन बलेन पृथ्व्याम्भृताङ्गयष्टिप्रमुखाः स्युरर्थाः ॥
तदत्र साधारणमस्ति भिन्नं रूपं समन्तान्नतु कृत्तभागे ॥ ३ ॥
आकर्षिता येन बलेन तूर्ध्वं धूमाग्निदेहादिप्रमुखाः स्युरर्थाः ॥
तदत्र साधारणमस्ति भिन्नं समं समन्तान्न सहस्रपत्रे ॥ ४ ॥
बले हिते सौरबलप्रसङ्गादुत्तिष्ठते सूर्य्यमभीदमङ्गम् ॥
आकृष्यते भौमबलात्तु वर्ष्म प्रसह्य पृथ्वीमनुभौतिकं यत् ॥ ५ ॥
देहे गुरुत्वं पृथिवीरसादिदं लघुत्वमस्मिन् द्युरसात्प्रजायते ॥
उत्थाय देहं भुवि यत्र तत्र यत्संचारयत्येष च तद्दिवो रसात् ॥ ६ ॥
मृतस्य देहेऽधिकमस्ति गौरवं तद्वास्तवं गौरवमस्ति दैहिकम् ॥
दिव्याद् रसाद् यल्लघुतोपपद्यते जीवत्यतः सा गुरुता कनीयसी ॥ ७ ॥
स्थितो यदिच्छन् स्वकरं पदं वा स्तब्धं दिवि स्थापयति प्रसह्य ॥
तदप्यमुष्मिन् द्युबलेन सिद्धं नाडीशरीराकृतिरप्यमुष्मात् ॥ ८ ॥
यत्तूच्छलन् द्राक् पतति क्षितावयं नेच्छन्नपि द्यामयमूर्ध्वमृच्छति ॥
देहं च मृत्यावपि नान्यलोकगं यदस्य तद्भूमिरसात् प्रसिद्ध्यति ॥ ९ ॥
भुक्तं यदन्नं परिपच्यते ततो भूत्वा रसः कृत्स्नशरीरमश्नुते ॥

मलं त्वपकं वहिरेत्य भुज्यगात् तत्रापि तावेव रसौ प्रयोजकौ ॥ १०
इत्थं पृथिव्याश्च दिवश्च मात्रया जीवोऽमुत्रत्र इति प्रवेदयन् ॥
गां मातरं द्यां पितरं त्रयीम्यहं कोऽडस्मि मातुः पितृदृष्टपालितः ॥११॥

## इति द्यावापृथिव्यधिकारः ॥

## ऋतसत्याधिकारः ( आर्तवाधिकारः )

१ स्नेहोस्ति रात्रिस्त्वहरस्ति तेजः कौषीतकिः पश्यति सर्वमाभ्याम् ॥
व्याप्तं तयोः स्निग्धमृतं नु तेजः सत्यं नु नाभ्यां परमस्ति किञ्चित् ॥ १ ॥
यत्राशनाया प्रबलास्ति यस्यान्योन्यं समन्वेतुमणू यतेते ॥
स्नेहः स वीतो यदणूनिशानाद् यन्नाभिसर्योन्वयि तद्धितेजः ॥ २ ॥
२ † ऋतं च सत्यं च भवस्य नेत्रे ऋतं भृगुः सत्यमिहाङ्गिरास्तु ॥
सोमश्च वायुश्च तथाऽऽप एते स्निग्धा अनुष्णाभृगवोन्वृतस्थः ॥ ३ ॥
यमोऽग्निरादित्य इति त्रयस्ते तेजोमया अङ्गिरसश्च सत्याः ॥
भृग्वङ्गिरोभ्यामिदमास्ति विश्वं व्याप्तं त्वहोरात्रमिदं प्रविद्यात् ॥ ४ ॥

†

| | | | | | |
|---|---|---|---|---|---|
| सोमःवायुः आपःअग्नि यम आदि | १ ऋतम्=भृगुः । २सत्यम्=आङ्गिराः | १ऋतम्=स्नेहः। २सत्यम्=तेजः। | १ ऋतम्=२ सूर्य्यरसः २सत्यम्=१वरुणपृथ्वी चन्द्ररसाः | १ऋतम्=सोमः। २सत्यम्=अग्निः। | १ऋतम्= चन्द्रः २सत्यम्= सूर्यः |

ऋतं सत्यमृतं सत्यमिति । अयंवा अग्निर्ऋतम् असावादित्यः सत्यम् । यदिवा—असावृतम्, अयं सत्यम् । उभयं वैतदयमग्निः तस्मादाह—ऋतं सत्यमृतं सत्यमिति ॥ ( शत. ६।२।१।१० ) ॥ "ऋतमेव परमेष्ठि ऋतं नात्येति किञ्चन ॥ ऋते समुद्र आहित ऋते भूमिरियं श्रिताः—॥" ( तै. ब्रा. कां. १ प्र. ५ अ. ५ ) ॥ ऋतं त्वा सत्येन परिषिञ्चामीति सायं परिषिञ्चति ॥ सत्यं त्वर्तेन परिषिञ्चामीति प्रातः ॥ अग्निर्वा ऋतम् । असावादित्यः सत्यम् ॥ अग्निमेव तदादित्येन सायं परिषिञ्चति । अग्निनाऽऽदित्यं प्रातः ॥ ( तै. ब्रा. २। १। ११ ) ॥ ऋताग्निमग्निशब्देनैव प्रायेणाचक्षते । सत्याग्निं त्विन्द्रशब्देन ॥ "आग्नेयी व रात्रिः, ऐन्द्रमहः"-इत्यग्निहोत्रे तैत्तिरीयोक्तेः ( तै. ब्रा. २। १। २ )

"कृष्णं नियानं हरयः सुपर्णा अपो वसाना दिवमुत्पतन्ति । त आव वृत्रन् सदनादृतस्यादिद् घृतेन पृथिवीव्युद्यते ॥ ( ऋ. सं ) ॥ पृथिवीं व्यूदुः"—इत्याथर्वणसंहितायां पाठः । ( ६। ३। २२। १ ) ॥ अनया ऋचा ऋतस्योत्तरदिगवस्थानं गम्यते । दक्षिणायनोपक्रमे वृष्ट्युपक्रमदर्शनात् । "यदा खलु वा असावादित्योन्यङ् रश्मिभिः पर्य्यावर्त्तते अथ वर्षति" । इति श्रुतेश्च ॥

ताण्ड्यब्राह्मणे ( १ अ. २ खं. ३ सू. ) "ऋतस्य सदने सीदामि, ऋतपात्रमसि"—इति मन्त्रयोर्ऋतशब्दः सोमार्थः । द्रोणकलशस्य सोमभाण्डस्य ऋतपात्रत्वेनाभिधानात् । तेन सोमसंभृता वाग्—ऋतम् । अग्निसंभृता वाक्सत्यम् । वाचः सर्वत्र व्याप्तया आकाशसंज्ञा । तत्राग्न्युत्पत्तौ तत्संभृत्या सत्यं नाम । वस्तून्यग्निरूपाणि । वस्तुसत्तया वाक्पदं सत्यं नाम । तदृते ऋतमिति । अग्न्यभावे स्वभावतः सोमव्याप्तिः । तदृतपदमिन्द्राग्न्यगुने हितं शुन्यम् । श्वानामेन्द्रः । ( ईथर ) सर्वाकाशपरिव्यापी । अग्नौरेतोधाः सोमस्तारतम्यादुपपन्न ऋतुः । आपोऽप्यजसदन्यः । उत्तरादिग् ऋतसदनम् सौम्यत्वात् ॥

प्राणो यदिस्नेहगुणः ससोमः स्थौल्यात् सवायुः पुनरापएताः ।
तेजोगुणोऽग्निर्द्विधि वाक् स इन्द्रः स्थौल्याद् यमोऽग्निः पृथिवीयमग्निः ॥५॥
१ प्राणः १ वाक्—२ वायुः २ तेजः—३ आपः ३ पृथ्वी ।
पृथ्वी जलं तेज उतैष वायुश्चाकाशसोमाविति भूतवर्गः ॥
व्यासक्तरूपाणि तदित्थमेतान्यृतानि सत्यानि जगत्स्वरूपम् ॥ ६ ॥

३ दिव्योऽग्निरिन्द्रस्तत एव पूर्णं सत्यं ततो रिक्तमृतं प्रतीयात् ॥
यत्रास्ति सूर्यस्य रसः स सत्यस्ततोऽतिरेकादृतमेव सर्वम् ॥ ७ ॥
यद्वारुणं चान्द्रमिदं च भौमं तन्मण्डलं सर्वमृतं वदामः ॥
ऋतं निशा भौमरसोऽथ सोमादुदक् प्रतीची वरुणाद् ऋतं स्यात् ॥ ८ ॥
आपश्च सोमोऽग्निरयं च भौमः सर्वेऽप्यमी नूनमृते वसन्ति ॥
रसस्य सौरस्य निधानमस्मिन्नृते न सत्येत्यृतमाहितं स्यात् ॥ ९ ॥

४ न चास्ति तद्धाम न यत्र सोमस्ततं हि सोमेन समन्ततः खम् ॥
तद्धाम साधारणमस्ति तस्मिन् क्वचित्क्वचिन्मण्डलमस्ति चाग्नेः ॥ १० ॥
अग्निर्बृहन्मण्डलमल्पकं वा यावत्तनोति हि तदस्ति सत्यम् ॥
ऋते तु तन्मण्डलतोऽग्निरिक्तं यद्धाम तत्सर्वमृतं प्रतीयात् ॥ ११ ॥
देवा इदं विश्वममीभिरेव ग्रन्थी भवद्भिर्हि मिथोऽनुबन्धात् ॥
पिण्डा अभूवन्निखिलास्त एते देवाश्च सोमाग्निभिदा द्विधा स्युः ॥ १२ ॥
ये वा यवो याः पुनराप एते सोमाश्च भूतानि च सोम एव ॥
यमोऽग्निरादित्य इति त्रयोऽपि स्युरग्निभेदा न परोऽस्त्यमीभ्यः ॥ १३ ॥
सोमप्रभेदा इह चन्द्रलभ्याश्चन्द्रो हि तत्संग्रहरूपपिण्डः ॥
अग्निप्रभेदास्त्विह सूर्यलभ्याः सूर्यो हि तेषामुपसंग्रहोऽस्ति ॥ १४ ॥

५ अग्निर्द्विधा यः प्रलयावधिः स्यात् संवत्सरः सौर इहैष सत्यः ॥
ऋतस्तु संवत्सर एष भौमः सौमाद् विशेषाकृतिभाग् ऋतुः सः ॥ १५ ॥
यः पार्थिवोऽग्निस्तमृतं प्रतीयादादित्यमग्निं तु वदन्ति सत्यम् ॥
असावयं चाग्निरिवैकरूपस्तस्माद् ऋतं सत्यमभिन्नमाहुः ॥ १६ ॥
अथापि वा पार्थिव एवसोऽग्निर्द्विधास्ति सूर्याग्नियुतः स सत्यः ॥
सोमान्वयादन्तरितस्त्वृतः स्यादवाचि सत्योऽप्यमृतोऽस्त्युदीचि ॥ १७ ॥
रात्रिस्त्वृतं स्यादिह चन्द्रमूलं सत्यं त्वहः स्यादपि सूर्यमूलम् ॥
कृष्णं च शुक्लं तदृतं च सत्यं रात्रिस्त्वहश्चेति ततोऽस्ति सृष्टिः ॥ १८ ॥
उभे अपीमे अहनी भवेतामहश्च कृष्णं ह्यहरर्जुनं च ॥
पठन्ति कृष्णेऽहनि रात्रिशब्दं न कालमात्रे तु तयोः प्रयोगः ॥ १९ ॥

६ *मूर्तस्तु कालो द्विविधोऽग्निसोमप्रभेदतस्तावपि शुक्लकृष्णौ ॥
योऽग्निः स शुक्लस्तदहः प्रतीयात् सोमस्तु कृष्णः स हि रात्रिशब्दः ॥ १ ॥

---

* अहोरात्रे वा अग्नीषोमौ । तमाहुर्द्विरूपः स्याच्छुक्लं च कृष्णं चाहोरात्रयोरूपेण । ( कौ. ब्रा. १०। ३ ) ॥

कौषीतकीया इदमित्थमाहुस्तावग्निसोमाविह सूर्य्यचन्द्रौ ॥
सूर्य्योऽग्निरूपो भुवनं विचष्टे सौम्यो निधिश्चन्द्र ऋतुं तनोति ॥ २ ॥
*पूर्वापरं चरतो माययैतौ शिशू क्रीडन्तौ परियातो अध्वरम् ॥
विश्वान्यन्यो भुवनाभिचष्ट ऋतुरन्यो विदधज्जायते पुनः ॥ ३ ॥
( मं. १० सू. ८५ ऋ. १८ )

† नवो नवो भवति जायमानो अह्नां केतुरुषसामेत्यग्रम् ॥
भागं देवेभ्यो विदधात्यायन् प्रचन्द्रमास्तिरते दीर्घमायुः ॥ ४ ॥
ऋतोऽस्ति सोमः किल तत्र तत्र वृद्धिक्षयाभ्यां कुरुते विशेषात् ॥
ऋतेऽग्निभागा ऋतवः षडेते भवन्ति सोमान्वयतारतम्यात् ॥ ५ ॥
अयस्तु सोमक्षयतारतम्या वसन्तपूर्वा ऋतवो भवन्ति ॥
सोमप्रवृद्धिक्रमतस्त्रयोऽन्ये सौम्यर्तवस्ते शरदादयः स्युः ॥ ६ ॥
ऋतेऽग्निभेदा ऋतवः षडेते संवत्सरस्यावयवा भवन्ति ॥
संवत्सरौ पार्थिव चान्द्रभेदाद् द्वौ सौरसंवत्सरगौ तु तौ स्तः ॥ ७ ॥
‡ द्वे ते चक्रे ब्रह्माण ऋतुथा विदुः ॥
अथैकं चक्रं यद् गुहा तदद्धातय इद्विदुः ॥ ८ ॥ ( १० । ८५ । १६ )
अस्यामृचि प्रोक्तमिदं त्रिचक्रं संवत्सरात्मेति वदन्ति केचित् ॥

---

* पूर्वापरमिति । पूर्वं गच्छति सूर्य्यः तमनुचरति चन्द्रः । इत्थमेतावादित्यचन्द्रौ मायया स्वप्रज्ञानेन पौर्वापर्य्येण दिवि चरतः तौ शिशू इवान्तरिक्षे—विहरन्तौ यज्ञं प्रतिगच्छतः । तयोरेक आदित्यः सर्वाणि जन्यजातान्यभिपश्यति । अन्यश्चन्द्रमा वसन्तादीनृतून् कुर्वन् पुनः पुनर्जायते ॥ चन्द्रस्य ह्रासवृद्धिसद्भावात् तदपेक्षयैव पुनः पुनर्जायत इत्युक्तिः । तैत्तिरीयसंहितायामप्युक्तम् "चन्द्रमा वै जायते पुनः"—इति ।७ ।४ ।१३ । यद्यपि सूर्य्यस्य ऋतुजनकत्वं लोका मन्यन्ते तथापि सूर्य्यस्यैकरूप्यादौ विशेषादृतुजनकत्वं नास्ति चन्द्रमास्तु ह्रासवृद्ध्यादि विशेषशालीस्वसंयोगवियोगाभ्यां सूर्य्याग्नौ तारतम्येनातिरेकं सृजतीति तस्यैव ऋतुजनकत्वं वेद्यम् ॥ १ ॥

† नवो नव इति ।जायमानो वर्द्धमानः सन्नवो नवो भवतीति शुक्लपक्षाभिप्रायम् । अह्नां द्वादशानां तिथ्यंशानामुपलक्षकः सङ्क्रमादुषसामग्रं सामीप्यमायातीति कृष्णपक्षाभिप्रायम् ॥ एवं द्वाभ्यां गतिभ्यामागच्छन् गतिं संमापयन् दर्शे च पूर्णमासे च देवेभ्यो भागं विदधाति । देवेभ्यो भागदाताच्च यजमानस्यायुः प्रतिरते प्रवर्द्धयति । अह्नां केतुरिति सूर्य्याभिप्रायं केचिद्योजयन्ति तद् भ्रान्तम् । सूर्य्यो देवीमुषसं रोचमानां मर्य्यो न योषामभ्येति पश्चादिति श्रुत्या सूर्य्यस्योषः पृष्ठगतिप्रसिद्धेः । तस्मादयं संपूर्णो मन्त्रश्चन्द्रपरो द्रष्टव्यः । पूर्वापरं नवो नव इति मन्त्रद्वयं सूर्य्यायाः सावित्र्या आर्षम् ॥ ८। ३। २३ ॥

‡ द्वे ते इति हे सूर्य्ये सावित्रि तव चन्द्रसूर्य्यात्मके द्वेचक्रे ऋतुषु विनिर्दिष्टे ब्राह्मणा जानन्ति । अथैकं तृतीयं संवत्सरात्मकं चक्रं गुहायां यन्निहितमस्ति तन्मेधावित एव जानन्ति । तस्य दुर्ज्ञेयत्वाद् प्रत्यक्षत्वात् ॥ एतदपि सूर्य्याया आर्षम् ॥ मनोमयस्यानस इति ॥ "मनो अस्या अन आसीद् द्यौरासीदुतच्छदिः । शुक्रावनड्वाहावास्तां यदयात् सूर्य्यागृहम्"—इति सावित्र्योक्तेर्मनसः शकटत्वं सूर्य्यचन्द्रयो रथवोढृत्वं प्रकल्पितं वेदितव्यम् ॥

मनोमयस्या न स एव वाऽन्यत् पृथक् त्रिचक्रं किमपीति चिन्त्यम् ॥९॥
भूमार्गचक्रं खलु दीर्घवृत्तं तत् त्रीणि केन्द्राणि भवन्ति तस्मिन् ॥
द्वे तूपपन्ने इह मासषट्कान्मध्यं तृतीयं तु पृथग्वदूह्यम् ॥ १० ॥
एतत् त्रिकेन्द्रं भवति त्रिचक्रं यदाह सूर्य्या सवितुः सुतासौ ॥
त्रिचक्रसंवत्सरमेतमेव न्यरूपयद्दीर्घतमा महर्षिः ॥ ११ ॥
द्वादशप्रधयश्चक्रमेकं त्रीणि नभ्यानिक उतच्चिकेत ॥
तस्मिन् साकं त्रिशता न शङ्कवोऽर्पिताः षष्टिर्न चलाचलासः ॥ १२ ॥
अंशाः स्थिरा अस्थिरतां भजन्ते वैषम्यतः प्रत्यहभूमिगत्याः ॥
वैज्ञानिकं चक्रमिदं न चाद्धा दृश्यं ततः प्राह मनोमयं तत् ॥ १३ ॥
ऋतून् पितॄनाहुरिमान् वसन्त ग्रीष्मादिकास्ते पितरो हि सौम्याः ॥
ऋतुप्रभावात् प्रकृतौ विकारा य आर्तवास्ते स हि सृष्टिकालः ॥ १४ ॥
अग्निर्यमो नाम परोस्ति कश्चित् सोऽग्नौ हि सोमान्वयरोधकः स्यात् ॥
सोमो यमासं निहिते शिवेऽग्नौ यावद्धुनस्तावदिहास्ति सृष्टिः ॥ १५ ॥
अग्निस्त्वहोरात्रिरयं स सोमो यमस्तु सन्धिर्न दिनं न रात्रिः ॥
अग्निर्हि सौम्यः सृजतीह विश्वं तस्मादहोरात्रजसृष्टिमाहुः ॥ १६ ॥
अध्यात्ममग्नौ यदि शोणितेऽस्मिन् सोमो हुतस्तन्नरबीजरेतः ॥
चतुर्युताशीतिमितं तदस्मिन् सौम्यं सहस्तिष्ठति सप्तकोशम् ॥ १७ ॥
पिण्डं तमाहुः समुहुः शरीरे भूत्वा मुहुस्तत्र विलीयते च ॥
स्यादोजसे स्यान्मनसे विलीनं क्षेत्रज्ञ वर्ग्यास्तमदन्ति देवाः ॥ १८ ॥
यद्यूर्ध्वरेताः प्रभवेत् तदेदं विद्यादधोरेतसि पूयते वा ॥
सूनस्तु पत्न्यां स विजायते वा पिण्डोयमात्मा स्वयमस्ति पुत्रः ॥ १९ ॥
सौम्यांशुपिण्डे द्विविधा विभागाः स्युः सूनवोऽन्ये पितरस्ततोऽन्ये ॥
सपिण्डता सप्तसु पुरुषेष्वप्राक्षीत् पुरादीर्घतमास्तमर्थम् ॥ २० ॥
* "पाकः पृच्छामि मनसाविजानन् देवानामेनानि हिता पदानि ॥
वत्से बष्कयेऽधिसप्त तन्तून् वितत्निरे कवय ओतवाउ" ॥२१॥ ऋ. सं. मं. १ । सू. १६४

---

* पाकः पृच्छामीति । पाको विशुद्धहृदयो निर्दम्भः सन्नहं मनसा अविजानन् अतिगहनमिदं तत्त्वम् विज्ञातुमशक्नुवन् पृच्छामि । संदेहास्पदानि इमानि देवानां पदानि निहितानि निगूढानि सन्ति । ततः पृच्छामि । एकहायने वत्से इवास्मिन्नादित्ये अधिकं तायमानात् सप्तसोमसंस्थान् यजमाना ओतवै तिर्य्यक् तन्तून् वेतुमिव वितन्वन्तिस्म । यद्वा सप्तसोम संस्थारूपत्तिर्य्यक्तन्तुसन्तानाय सप्तच्छन्दांसि वितन्वन्निरमेति सायणोव्याचष्टे । अथ याज्ञिकसोमसंस्थानामादित्यपरतया व्याख्यानं नातीव रोचते । याज्ञिकस्य दीर्घतमसो यज्ञविज्ञाने पूर्णनैपुण्यात् तद्विषयप्रश्नासामञ्जस्यात् ॥ वस्तुतस्तु बष्कयशब्दस्तरुणवचनः । तारुण्यं चापत्यप्रजननतायोग्यत्वम् । तादृशे वत्से संतानेऽधिकृत्य पित्र्यान् सप्ततन्तून् सप्तसहोभागान् सूत्ररूपेण स्वस्मिन्नुपपन्नान् पुनरोतवै पुत्रपौत्रादिवत्ससप्तके सन्तननाय वितन्वन्तिस्म इत्येव साधीयानर्थः प्रतिपत्तव्यः । अथवा प्राणिशरीरे निहितान्येतानि देवानामग्निसोमादीनां पदानि मनसा हृदयतोऽविजानन्त आनानः पाको बालकोऽहं कविभ्यः पृच्छामि । हे कवयः ! यद्देवाः बष्कये तरुणवत्सवति वत्सेऽधिकृत्य प्रारभ्य सप्ततन्तून् श्रद्धासूत्राणि । ओतवै—उ पुनरग्रे तन्तुसंतानाय वितेनिरे । बष्कयो बष्कयणी बष्कयणीत्यादयः शब्दास्तरुणवत्सवत्य-

देवं सहोयन्निहितं हि तस्मिन् पित्र्यं सहोऽप्योतमितीममर्थम् ॥
संक्षिप्तमाहै भगवान्महर्षिः स वामदेव्यो बृहदुक्थ ऊचे ॥ २२ ॥
*"महिम्न एषां पितरश्च नेशिरे देवा देवेष्वदधुरपि क्रतुम् ॥
समविव्यचुरुत यान्यात्विषु रैषां तनूषु निविविशुः पुनः॥२३॥ (ऋ.सं.१०मं.५६सू.४ऋ.)
सहोभिर्विश्वं परिचक्रमू रजः पूर्वा धामान्यमितामिमानाः ॥
तनूषु विश्वाभुवनानि येमिरे प्रासारयन्त पुरुध प्रजा अनु ॥ २४ ॥ ( १०। ५६। ५ )
द्विधा सूनवोऽसुरं स्वर्विदमास्थापयन्त तृतीयेन कर्मणा ॥
स्वां प्रजां पितरः पित्र्यं सह आवरेष्वदधुस्तन्तुमाततम् ॥ २५ ॥ ( १०। ५६। ६ )

---

र्थे रूढाः। तरुणो युवा पौत्रप्रभृत्यपत्यमिति प्राचां संज्ञा । अपत्यं पौत्रप्रभृति गोत्रं जीवति तु वंश्ये युवेति पाणिनिस्मरणात्। तेन पौत्रप्रभृतिगोत्रद्वयाद्यपत्यजनकत्वं वण्कत्व-मिति सिद्धम्। वत्सः पुत्रः। पौत्रप्रभृत्यपत्यजननयोग्ये पुत्रेऽधिकृत्य वितननमारब्धमित्यर्थः। पुत्रे वितननं च न केवलं पुत्रस्वरूपमात्रसिद्ध्यर्थमेव, अपि तु पुत्रतोऽप्यग्रे पौत्रादिषु तन्तु संतानाय चक्रिरे इत्याह—योतवाउ इति सन्तवः संतानि तानि श्रद्धासूत्राणि पिण्डावयव-रूपाणि। तत एवापत्यानां जननात् तत्तदंशप्रादुर्भावेऽपि तेषु सत्सु तन्तुशब्दः संतान-पाङ्कुरवदुपा प्रयुक्तो दृश्यते वेदे इति बोध्यम्। अथवा—अविजानन् अहं मनसा पाकः पवित्रो निर्मूढः पृच्छामि। कवयोऽग्निसोमादयो देवाः सप्त तन्तून् सह प्रजा अधिकृत्य उपत्रपय सहप्रजासिद्ध्यर्थमोतवै उत्तरोत्तरं तन्तुसंतानाय वण्कये पुत्रे निहितान्येतानि देवानां पदानि पितृदेवमयानि श्रद्धाद्रव्याणि वितेनिरे इत्यर्थः। बृहदुक्थादिमहर्षिसमाजे तादृशार्षिव्य विज्ञानस्य प्रसिद्धत्वेऽपि तस्यैव श्रूयमाणविशिष्याविज्ञानता दीर्घतमसा तादृशप्रश्नकरणेन स्वहृदयसरलभावोद्बोधनौचित्यात्। अत्र कवय इति पित्रादिशरीरस्था अग्नयो वा तादृश विद्याप्रकाशकाः बृहदुक्थादिमहर्षयो वेत्युभयथोपपादयितुं शक्यते। बृहदुक्थस्तु तमर्थं स्पष्टमाचष्टे—

* महिम्न इति ॥ चनेत्यप्यर्थः ॥ अस्माकं पितरोऽपि एषां देवानां महत्त्वस्येश्वरा अभवन्। देवत्वं प्राप्तास्ते पितरो देवेष्विन्द्रादिषु क्रतुं संकल्पमधारयन् अपि च तानि तेजांसि समविव्यचुः संगतान्यासन् यानि अत्विषुः=दीप्यन्ते। एषां देवानां शरीरेषु पुनर्निविविशुः पितरः ॥ १ ॥ मदीयाः पितरः सहोभिर्बलैः सर्वं लोकं पर्यक्रामन्। अन्यैरमितानि पूर्वाणि स्थानानि परि-च्छिन्दन्तः सर्वाणि भूतजातानि स्वशरीरेषु न्ययमयन् बहुप्रकारं च प्रजा अनुज्योतींष्युदकानि वा प्रासारयन्त। अस्मत्पितरः पूर्वेऽङ्गिरसः स्वसामर्थ्येन सर्वं लोकं व्याप्य पुरातनानि ग्रहन-क्षत्रादीनि परिच्छिद्य सर्वभूतानि नियम्य प्रजा अनूदकानि तेजांसि वा प्रसारितवन्त इत्यर्थः २ ॥ सूनव आदित्यस्य पुत्रा अङ्गिरसः असुरं बलवन्तं स्वर्वेदं स्वर्विदं स्वर्गज्ञं स्वर्गलम्भकं वा आदित्यं तृतीयेन प्रजोत्पादनाख्येन कर्मणा द्विप्रकारमास्थापयन्ति—उदितं चास्तमितं च कुर्वन्ति। किञ्च पितरोऽङ्गिरसः स्वां प्रजामुत्पाद्य पित्र्यं सहः पितुरादित्यस्य बलं निकृष्टप्रजा-रूपेषु मनुष्येष्वास्थापयन्। यथा पित्र्यं धनं परिरक्ष्य पुत्रेभ्यः प्रयच्छन्ति तद्वत्। किंच तन्तुं प्रजां विततं कृतवन्तः। "प्रेयं ह्यातत तन्तुर्यज्ञेति। प्रजातन्तुं माव्यवच्छेत्सीरिति। तन्तुं तन्वन्निति मन्त्रव्याख्यायां प्रजा वै तन्तुरिति च, ब्राह्मणवचनेभ्यस्तन्तुशब्दः प्रजायां प्रवर्तते ॥ (१— । २—शिक्षोपनिषद्—।३—ऐ. आ. २।११—) ॥ नौकया क्षोद उदकमिव, स्वस्तिभिः क्षेमैः सर्वाणि दुर्गाणि दुर्गमानि वा यथातितरन्ति तथा बृहदुक्थः स्वां प्रजां वाजिनं नाम मृतं पुत्रं स्वमहत्त्वेनावरेष्वग्न्यादिषु परेषु सूर्यादिषु आदधादिति सायणो

नावा न क्षोदः प्रदिशः पृथिव्याः स्वस्तिभिरति दुर्गाणि विश्वा ॥
स्वां प्रजां बृहदुक्थो महित्वा ऽवरेष्वदधादा परेषु" ॥ २६ ॥ ( १० । ५६ । ७ )
एषां बलानां पितरश्च देवाश्चापीशते ते समविव्यचुश्च ॥
क्रतुं च देवेष्वदधुः पृथक्कस्थानेमान् प्रमीताः प्रविशन्ति पश्चात् ॥ २७ ॥
लोकान् सहोभिर्निखिलानटन्ति पूर्वाणि धामान्यमितानि मात्वा ॥
यच्छन्ति तन्वां भुवनानि तानि प्रसारयन्ते बहुधा प्रजाश्च ॥ २८ ॥
ये स्वर्विदो येऽप्यथ राक्षसा इति द्वैधाऽसुराः स्वर्विदशुक्लचन्द्रमाः ॥
मासेन सौम्याराव आत्मनि क्रमादशेरते विंशतिरष्ट चाह्निकाः ॥ २९ ॥

मन्त्रचतुष्टयं व्याचष्टे न । १। १८ ॥ वयं तु ब्रूमः । महिम्न इति । एषां देवानां महत्त्वं पितरोऽपि समर्थन्ते । पितरोऽपि देवत्वं प्राप्ताः सन्तीति वा देववत् पितरोऽपि कर्म कुर्वन्तीति वा यत्र देवाः किञ्चित् कर्म कुर्युस्तत्र पितरोऽपि संसज्जन्ते इति वा तात्पर्य्यम् देवेष्वपि देवः क्रतं क्रियां स्वीयं बलं निवेशयन्ति । सुत्यां नामाहुतियज्ञं वा जुह्वति । यत्र कश्चिद्देवः किञ्चित्कुरुते तत्रान्योऽपि देवः समासज्य स्वबलेन किञ्चित्सह कुरुते । अत एव देवकर्मसु येष्वन्नाद्यात्म-कर्मसु पितरोऽपि भागिनो भवन्ति । अथवा पितरोऽपि देवा इति कृत्वा पितरः पितृभिः संसज्य कर्म कुर्वन्तीत्यर्थः । यद्वा अग्न्यादिदेवेषु भौतिकः सोमो हूयते स सुत्या यज्ञो भवति । किन्त्विह देवा एव देवरूपानेव सोममयान् पितॄन् स्वशोणितेऽग्नौ जुह्वति । न मनुष्या एव सोमं जुह्वति अपि तु देवा अपि देवेषु देवमयं क्रतुं जुह्वतीत्यर्थः । यानीति प्रकरणात् सहः कर्मेति । यानि महांसि पितॄणां समविव्यचुः परस्परेण सह संगम्य व्यक्तिमगच्छन उत अपि चाल्पजीवनकालपर्य्यन्तम् अविवुः अदीप्यन्त प्रतिप्रासन्ते स्म । तानि ऊर्ध्वं केन-चित्कालेन एषामेव पितॄणां तनूषु सपिण्डीकरणवेलायां निविविशुः सप्तानां पितॄणां सहां-स्येकत्रीभूय पुत्रपौत्रादितन्तुरूपेणाभिव्यक्तानि भूत्वा तन्मरणोत्तरं तानि सहांसि पुन-स्तेष्वेव पितृषु भागशः प्रविशन्तीत्यर्थः । समं विव्यचुरिति वक्तव्ये कालदोषादनुस्वारपातः॥१९॥

सहोभिरिति । सहः शब्दः पुत्रपौत्रादिषु सूयमानं पिण्डावयवद्रव्यमाह । रजःशब्दो लोकवचनः प्रकृते पुत्रपौत्रादिसप्तापत्यशरीराभिप्रायः । पूर्वशब्दः पुत्रादिषु पिण्डभागा-हुतेः पूर्वकालिकत्वं आह । धामशब्दः पिण्डाभिप्रायः । अमितानि व्यवच्छेदरहितानि । तनूष्विति तनुशब्देन सप्तषट्पञ्चचतुस्त्रिद्व्येकरूपाः पितृसंज्ञकाः पिण्डभागा विवक्षिताः । भुवनशब्देन जायमानाः सूनुसंज्ञकाः पिण्डभागा गृह्यन्ते पुरुधेति बहुधार्थः । तेनायमर्थः । पत्नीशरीरे शुक्राहुतेः पूर्वकालिकानि सप्तषट्पञ्चादिव्यवच्छेदरहितानि पिण्डरूपाणि सप्त-षडादिव्यवच्छेदैर्व्यवच्छेदयन्तः पितरः सर्वं पुत्रपौत्रादि समापत्यशरीरं सहोभिः वीर्य्यैः परिचक्रमुः पर्य्याक्रामन् । तानि च भुवनानि पुत्रादिरूपेणोत्पद्यमानानि सूनुसंज्ञकानि सहांसि तनूषु पितृशरीरेषु सप्तषडादिरूपेषु न्ययमयन् । तन्नियतान्यकुर्वन् । एकविंशतिसप्तकेन पञ्चदशं षट्केनैव जातं जातं भागं योनिशरीरे बद्धं तदधीनमकुर्वन् ॥ अच्छिन्नमूलान्येव तानि भुवनानि सूनुसहांसि प्रजाः सप्तापत्यान्यनुप्रासारयन्त, तच्च प्रसारणं नैकरूपम् अपितु क्वचिदधिकं क्वचिदल्पं क्वचिदत्यल्पमिति विशेषः द्विधासूनव इति । एकविंशत्यादि पिण्डभागैः सुतैर्जायमानाः पुत्रादयः तृतीयेन कर्मणा पुत्रोत्पादनरूपेण स्वर्विदमसुरं सौम्यसहोरूपं द्विधा आस्थापयन्त—आत्मनीनमत्याज्यमन्यत् । सवनीयं त्याज्यमन्यत् । तत्राद्यं सप्तषट् पञ्चादिसंकलनयाऽष्टाविंशतिसंख्यम् । द्वितीयं त्वेकविंशति पञ्चदशादिसंकलनया षट् पञ्चाशत्संख्यम् । इत्थं कृत्वा पितरः स्वां प्रजामेकविंशतिभागरूपां, पित्र्यंसहः पञ्चदशादि

नाद्यप्रमासादुदैरयस्मैश्चन्द्रोऽशुचिन्दून् गृजतीह देहे ॥
पिण्डोऽष्युग् विंशतिरिन्दुभिस्तनन्तरूप चोक्त्य चियानि शाले ॥ ३० ॥
नभित्यब्दसंतानवशादपत्यान्युपत्नि तत्संतननं क्रमेण ॥
पत्येकयुग् विंशतिरस्य पुत्रे मसान्युदात्मन्यनुयोगिसूत्रम् ॥ ३१ ॥
पुत्राद्गताः पञ्चदशाक्ष्यपौत्रे पुत्रे पदुक्ता अणुयोगिसूत्रम् ॥
पौत्रात्प्रपौत्रे तु गुना दश स्युः पञ्चाग्निशिष्टास्तु वसन्ति पौत्रे ॥ ३२ ॥
पट्ड्येकविन्दुक्रमतः परेभ्यः स्तुत्याः कृताः सौतृषु चापरेऽस्तुः ॥
तदित्थमेकः क्रमतोऽस्ति पिण्डः संतानितः सप्तसु पूरुषेषु ॥ ३३ ॥
सौम्यात्पुरा आत्मगता द्विधा पुनः स्युः सूनवः स्युः पितरः पृथक् पृथक् ॥
एकाधिका विंशतिरत्र सूनवः सप्ताग्निशिष्टाः पितरो न सूनवः ॥ ३४ ॥
पुत्रस्य चाध्यात्मभिदेकविंशतौ स्युः सूनवः पञ्चदशात्मनीह पद ॥
पौत्रे पुनः स्युर्दशसूनवः परे पंचाग्निशिष्टास्तु तदात्मनां गताः ॥ ३५ ॥
षट् सूनवोऽथ पप पच सूनवोऽप्येकोऽत्र सूनुः पितरोऽवशेषिताः ॥
इत्थं क्रमात् प्राणिनतौ पृथक् पृथक् ते सूनवस्ते पितरोऽस्तुरग्रगः ॥ ३६ ॥
पञ्चाशदित्थं सहषड्भिरुत्तरैः सहांसि पित्र्याणि सहानुधेरते ॥
स्वतः पुनर्विंशतिरष्ट चाहिताश्चतुर्युताशीतिसहांसि तद्विदुः ॥ ३७ ॥
तत्सूनवः पित्र्यसहः स्वकं सहोऽप्याहथापयन्तीह सहस्थितं द्विधा ॥
आत्माऽभुवद्विंशतिरष्ट च ध्रुवाः रसेषुभिः संततिनन्तवे मिताः ॥ ३८ ॥
चत्वारि कर्माणि भवन्ति तत्र द्वाभ्यां ग्रहस्त्यागं उतापराभ्याम् ॥
उत्पद्य जीवन् जनयत्यपत्यान्युत्क्रम्य चन्द्रे विलयं प्रयाति ॥ ३९ ॥
प्रजायते पित्र्यसहोभिरादितश्चन्द्राच्च गृह्णाति पृथक् सहः क्रमात् ॥
पितुश्च चन्द्राच्च यहोन्मितानि स द्वाभ्यामुपादाय सहांसि जीवति ॥ ४० ॥
अथ द्विधास्थापिततत्सहश्च यत् स्वीयं सहः पित्र्यसहश्च तन्तुवत् ॥
गोत्रेऽवरेष्वाततमादधुस्तुवत् सासन्ततिर्नाम तृतीयकर्म तत् ॥ ४१ ॥

---

भागरूपं चावरेषु पौत्रादिषु आततं तन्तुं वितायमानं सूत्रमादधुः । एतदेवतृतीयं कर्म यत् स्वं सहः पित्र्यंसहश्च समुच्चितरूपेणावरेषु पुत्रादिषु सप्तसु पुरुषेष्वावपति । चतुर्थेन तु कर्मणा पित्र्यं सहः परेषु सप्तसु पुरुषेषु पित्रादिषु प्रत्यर्पयिष्यति । तदाह । पारमपारं गच्छन्त्या नौकया जलप्रवाहमिव स्वस्तिभिर्जीवनसूत्रैरपाररूपायाः पृथ्व्याः पाररूपायाश्चान्द्रमसः प्रदिशश्चान्तरन्तो दुर्गाणि प्रवाहस्थानीयानि तीर्णो बृहदुक्थो नाम महानात्मा महित्वा स्वमहिम्ना स्वां प्रजामेकविंशत्यादि सूत्ररूपामवरेषु पुत्रादिषु सप्तपुरुषेषु पृथ्वीस्थानेषु तथा परेषु पित्रादिषु सप्तपुरुषेषु चन्द्रप्रदिक्स्थेषु आदधुः । सौम्यसहसः पिण्डस्य सप्तविभागाः कांश्चित्कालान् पृथिव्यां पुत्रादिषु तिष्ठन्ति, कांश्चिद्बहुकालान् चन्द्रे पित्रादिषु तिष्ठन्ति नातः परं कुत्रापि तत्स्थितिः । तदित्थं चत्वारि कर्माणि पितॄणां व्याख्यातानि–षट्पञ्चाशत्संख्यं पित्र्यंसहः उपादाय जन्मग्रहणं प्रथमं कर्म ॥ १ ॥ अष्टाविंशतिसंख्यं नवीनं निजं सहोयदुपादत्ते तद्द्वितीयं कर्म ॥ आभ्यां सहोग्रहणं भवति ॥ २ ॥ अथ षट्पञ्चाशत्संख्यस्य सवनीयभागस्यावरेष्वाधानं तृतीयं कर्म ॥ ३ ॥ तथाष्टाविंशतिसंख्यस्यात्मनीनभागस्य परेष्वाधानं चतुर्थं कर्मेति बोध्यम् ॥ ४ ॥

संतानितं सप्तविधं तदुत्क्रमात् पुनर्यदा ज्योतिरुपैति तन्निजम् ॥
गोत्रेऽष्टमे सन्ततितन्तुसंग्रहात् संपद्यते स्वात्मनि पूर्णतांगतम् ॥ ४२ ॥
स पुरुषः प्रैति यदा तदानीमयं महांश्चन्द्रमसि प्रयाति ॥
आसप्तमं पुरुषमत्र तिष्ठन् विमुच्यते संततिबन्धसूत्रैः ॥ ४३ ॥
चन्द्रस्थसोतृप्त्वथ चन्द्रगः सन् प्रत्यर्पयेद् यर्हि तदेष लब्धैः ॥
स्वैरष्टयुग्विंशतिबिन्दुभिस्तैर्विच्छिन्नसूत्रः स भवेदपत्यैः ॥ ४४ ॥
यतश्चतुर्थं किल कर्म धीयते संरुध्यते यत् त्रिषु पूर्वकर्मसु ॥
भूतैः पृथिव्या तदितोऽतिमुच्यते नास्य प्रजातन्तुरिहास्ति चाततः ॥४५॥
इत्थं पितृस्तोमगतिः सपिण्डता परेषु सप्तस्वपरेषु चोदिता ॥
भूतात्मदिव्यात्मयुजोऽन्तरात्मनःसौमस्य नातःपरतःस्थितिःक्वचित् ॥४६॥
पारादवाराच्च तटात् प्रवाहं नावेव चान्द्र्याः प्रदिशः पृथिव्याः ॥
दुर्गाणि तीर्थैः स्थितिभिः प्रजासु सौम्योरसः स्वार्विदिहासुरोऽस्ति ॥४७॥
यथा तु चन्द्रात् पृथिवीमुपैति यथा पृथिव्याः शशिनं प्रयाति ॥
एवं स्वकीयं च सहो नरस्यावरेषु चायाति परेषु याति ॥ ४८ ॥
यद्वाततं सप्तसु पूरुषेषु श्रद्धानसूत्रं प्रवदामि तां गाम् ॥
प्रत्यर्पणात्सोऽक्रियते तदासौ स्वयोनिमायाति जहाति यूथम् ॥ ४९ ॥

| | सपिण्डपुरुषाः | पिण्डस्य सहांसि | अपत्यानि | सन्तानाः | | पिण्डभाजः पुरुषाः पितरः | अपुत्रे पितृसहांसि | सपुत्रे पितृसहांसि | |
|---|---|---|---|---|---|---|---|---|---|
| १ | आत्मनि | २८ | ७ | २१ | ७ | वृद्धातिवृद्धप्रपितामहस्य | १ | १ | ० |
| २ | पुत्रे | २१ | ६ | १५ | ६ | अतिवृद्धप्रपितामहस्य | ३ | २ | १ |
| ३ | पौत्रे | १५ | ५ | १० | ५ | वृद्धप्रपितामहस्य | ६ | ३ | ३ |
| ४ | प्रपौत्रे | १० | ४ | ६ | ४ | प्रपितामहस्य | १० | ४ | ६ |
| ५ | वृद्धप्रपौत्रे | ६ | ३ | ३ | ३ | पितामहस्य | १५ | ५ | १० |
| ६ | अतिवृद्धप्रपौत्रे | ३ | २ | १ | २ | पितुः | २१ | ६ | १५ |
| ७ | वृद्धातिवृद्ध प्रपौत्रे | १ | १ | ० | १ | आत्मनः | २८ | ७ | २१ |
| ० | अष्टमे | ० | ० | ० | | | | | |
| | | ८४ | २८ | ५६ | | | ८४ | २८ | ५६ |

* "अवः परेण पर एनावरेण पदा वत्सं बिभ्रती गौरुदस्थात् ॥
साकद्रीची कंस्विदर्धं परागात् क्वस्वित् सूते न हि यूथे अन्तः ॥ ५० ॥

मं. १ सू. १६४ । ऋ. १७ ॥

एकस्त्रयः षड् दश किञ्च पञ्चदशैकविंशत्युदिता विभागाः ॥
स्युः सप्तमाद्व्युत्क्रमपूर्वपुम्भ्योऽष्टाविंशतिस्तु स्त्रगता विभागाः ॥ ५१ ॥
चतुर्युताशीतिमितैस्तदित्थं सौम्यैः सहोभिर्भ्रियते य आत्मा ॥
सोऽयं महांश्चन्द्रमसो हि लोकादुपेत्य योन्याकृतिभेदमेति ॥ ५२ ॥
प्रेत्येन्दुगश्चन्द्रमसर्तुधात्रा कोऽसीति पृष्टः प्रतिवक्ति चन्द्रम् ॥
विचक्षणः सोम इतोहि रेतो यदाभृतः सोऽहमिहार्तवोऽस्मि ॥ ५३ ॥
नाक्षत्रिकद्वादशमासरूपः संवत्सरः सोऽस्ति पिता स गर्भे ॥
देहं विनिर्म्माति तदेवमर्थं कौषीतकीया भगवन्त आहुः ॥ ५४ ॥

† "विचक्षणाद् ऋतवो रेत आभृतं पञ्चदशात् प्रसूतात् पित्र्यवतः ॥
तन्मा पुंसि कर्तर्य्येरयध्वं पुंसा कर्त्रा मातरि मासिषिञ्च ॥ ५५ ॥
स जायमान उपजायमानो द्वादश त्रयोदश उपमासः ॥
द्वादश त्रयोदशेन पित्रा सं तद्विदेहं प्रति तद्विदेहम् ॥ ५६ ॥
तन्म ऋतवो १ अमर्त्यव १ आरभध्वं तेन सत्येन ॥
तपसा ऋतुरस्मि, आर्तवोऽस्मि, कोऽसि त्वमस्मि ॥ ५७ ॥

यदस्ति किञ्चित् तदिदं समस्तं स्नेहश्च तेजश्च भवेद् द्विधैव ॥
आर्द्रं च शुष्कं च तदेतदाहं विद्यादहोरात्रत एव सर्वम् ॥ ५८ ॥

[ शत. कां. ६। प्र. ५। ब्रा. २। कं. २३ ]

यदस्ति तेजो यदिहास्ति शुष्कं तदग्निमूलं स च सूर्य्यमूलः ॥
तत्सोममूलं स च चन्द्रमूलः स्नेहो यदार्द्रं तदहश्च रात्रिः ॥ ५९ ॥
गायत्रिका ज्योतिरिदं ह्यहस्तत् पाप्मा तु रात्रिस्तम इत्यवेहि ॥
ज्योतिस्तदग्निस्तम एष सोमस्ताभ्यामिदं विश्वमभिव्यनक्ति ॥ ६० ॥

## इति आर्तवाधिकरणम् ।

---

* 'अग्नावाहुतिर्गोरूपेण स्तूयते—अवः परेणेति । आहुतिर्गोरूपा वत्सस्थानीयमग्निमवस्ताद्धोदेशे परेण स्त्रपादेन परस्तादुपरिदेशे त्वनेनावरेण स्वपादेनाकृष्य बिभ्रती सती सूर्य्यं प्रत्युत्तिष्ठति । कद्रीची क्वगतेत्यनिश्चयगमना सा गौः कं विभागमगच्छत् । कुत्र वा प्रदेशे फलमुत्पादयति । इति न ज्ञायते । न ह्ययं गौः सजातीयगोमध्ये, क्वचिद् दृश्यते इत्यर्थः ॥ अथवा सूर्य्यरश्मिरूपा गौर्वत्सस्थानीयं यजमानं पूर्वोक्तरीत्या बिभ्रती दिवं गच्छति । "तं नयन्त्येताः सूर्य्यस्य रश्मयो यत्र देवानां पतिरेकोऽधिवासः"—इति श्रुतेः । इति सायणव्याख्या ॥

† विचक्षणादिति कौषीतकीयोपनिषदि श्रूयते । "असौ वै सोमो राजा विचक्षणश्चन्द्रमाः"—इति कौषीतकिब्राह्मणे ७ अध्याये १० कण्डिकायाम् ( १२। ५ च ) ॥ रेतः सोमः । ( कौ. ब्रा. १३। ७ ) ॥

## सप्ताहाधिकरणम् ।

द्यावापृथिव्यौ न पृथक् पुरास्तां पृथ्व्या समं द्यौश्च दिवा च पृथ्वी ॥
कालेन सौर्य्या अभवत् पृथिव्या अपत्यरूपा पृथिवीयमन्या ॥ १ ॥
यथा तु सूर्य्येऽपि च ते सहास्तामद्यापि ते यद्वदिह स्थितेस्तः ॥
यथा च भूमावपि सूर्य्यवत्ते अन्ये सहस्तस्तदिहानुवच्मि ॥ २ ॥
यत्सृज्यते तद् त्रिकमेव साकं ह्यन्नादमस्यावरनं तदन्नम् ॥
प्राणो मनोवागिति यत् त्रयं तत् संश्लिष्यते तेन विभाति सूर्य्यः ॥ ३ ॥
भूमिस्तु येयं पृथिवी पृथक्स्था तत्रापि तद्वत् त्रयमेतदस्ति ॥
सूर्य्यो मनस्तत्र तु वाक् तदङ्गं वागेव पृथ्वी मन एतदङ्गम् ॥ ४ ॥
* सूर्य्ये स्थितानामभिधा अमीषां ज्योतिस्तु गौरायुरितिक्रमात् स्युः ॥

| | | | | | | |
|---|---|---|---|---|---|---|
| आवपनम् = मनः | मनः = ज्योतिः = द्यौः | ⌄ (सू.) ⌃ | द्यौः=द्यौः=मनः | अग्निः | तेजः | सूर्य्यः |
| अन्नादः = प्राणः | प्राणः = गौः = अन्त | + | अन्त=गौः=प्राणः | इन्द्रः | आपः | वायुः |
| अन्नम् = वाक् | वाक् = आयुः = पृथ्वी | ⌄ (पृ.) ⌃ | पृथ्वी=वाक्=वाक् | विश्वे-देवाः | अन्नम् | अग्निः |

| | अहानि | देवाः | अभिप्लवाः | छन्दांसि | स्तोमाः | पृष्ठानि | रूपाणि | रूपाणि |
|---|---|---|---|---|---|---|---|---|
| १ | अहः | अग्निः | ज्योतिः | गायत्री | त्रिवृत् ९ | रथन्तरम् | करिष्यत् | आयाति प्रयाति |
| २ | अहः | इन्द्रः | गौः | त्रिष्टुप् | पञ्चदशः १५ | बृहत् | कुर्वत् | स्थितम् |
| ३ | अहः | विश्वे-देवाः | आयुः | जगती | सप्तदशः १७ | वैरूपम् | कृतम् | समानोदर्कम् |
| ४ | अहः | अग्निः | वाक् | अनुष्टुप् | एकविंशः २१ | वैराजम् | करिष्यत् | आयाति प्रयाति |
| ५ | अहः | इन्द्रः | गौः | पंक्तिः | त्रिणवः २७ | शाकरम् | कुर्वत् | स्थितम् |
| ६ | अहः | विश्वे-देवाः | द्यौः | अतिच्छन्दाः | त्रयस्त्रिंशः ३३ | रैवतम् | कृतम् | समानोदर्कम् |
| ७ | अहः | श्रीः | श्रीः | श्रीः | श्रीः | श्रीः | श्रीः | श्रीः |

* यत्तु तैत्तिरीसंहितायाम्—"ज्योतिर्गौरायुरिति ज्ञाताः स्तोमा भवन्ति । इयं वाव ज्योतिः । अन्तरिक्षं गौः । असावायुः । एष्वेव लोकेषु प्रतितिष्ठन्ति ( ७ । २।४= ७। ३। ६ = ७। ३। ५ ) इत्येवं ज्योतिषः पृथ्वीत्वमायुषस्तु द्युलोकत्वमाख्यातं तत्सूर्य्यापेक्षया द्रष्टव्यम् । प्रतिपिण्डं स्तरेषु प्रथमादिषु पृथिव्यादिशब्दव्यवस्थानात् । सूर्य्यस्य हि स्तरेषु प्रथमस्य ज्योतिष्ट्वात् तृतीयस्य चायुष्ट्वादविरोधः ॥

भूमिस्थितानां तु पुनस्त्रयाणां वाग् गौरथ द्यौरिति चाभिधाः स्युः ॥ ५ ॥
ज्योतिर्मनः प्राण इहोच्यते गौरायुस्तु वागस्ति यदस्ति सूर्ये ॥
वागेव वाक् प्राण इहोच्यते गौर्मनस्त्विह द्यौर्यदि चेत् पृथिव्याम् ॥ ६ ॥
त्रिवृत्कृतं ज्योतिरिहाग्निरुक्तस्त्रिवृत्कृता गौरियमिन्द्र इष्टः ॥
त्रिवृत्कृतायुस्त्विह विश्वदेवाः सहाधिदेवाः दिवि ते त्रयः स्युः ॥ ७ ॥
त्रिवृत्कृता वागियमन्नमुक्तं त्रिवृत्कृता गौरुदिता इहापः ॥
त्रिवृत्कृता द्यौरिह तेज उक्तं भूतानि तु त्रीणि भुवि स्थितानि ॥ ८ ॥
यावन्मनस्तावदिहास्ति साद्यौः पृथ्वी तु सा स्यादिह यावती वाक् ॥
द्यावापृथिव्योः पुनरन्तरीक्ष्यः प्राणस्तयोरेव च सोऽनुपक्तः ॥ ९ ॥
सूर्यस्त्रिलोकीमय एष पूर्वं ह्यासीत् ततोऽभूत् पृथिवी त्रिलोकी ॥
सूर्यो मनो वागथ पार्थिवोऽग्निः प्राणोऽन्तरीक्ष्यः पुनरत्र वायुः ॥ १० ॥
* एकपाद् द्विपदो भूयो विचक्रमे द्विपात् त्रिपादमभ्येति पश्चात् ॥
द्विपाद्ध षट्पदो भूयो विचक्रमे त एकपदस्तन्वं समासते ॥ ११ ॥
(अथर्व सं. १३। २। २) ॥
प्रस्थानभेदाच्च तदित्थमेते द्यावापृथिव्यौ त्रिविधे भवेताम् ॥
सूर्ये पृथक् ते पृथगेव पृथ्व्यां सूर्यश्च पृथ्वी च पृथक् तृतीये ॥ १२ ॥
परे च वीते अवरे च वीते द्यावापृथिव्यौ भवतः पृथक् ते ॥
इमे तृतीये तु विवाहितेते त एव माता पितरौ भवेताम् ॥ १३ ॥
द्यौरेष सूर्यस्त्रिविधः स उक्तो ज्योतिश्च गौरायुरिति प्रभेदात् ॥ †

---

* इति मन्त्रव्याख्यायां गोपथे—"एकपाद् द्विपद इति । वायुरेकपात् । तस्याकाशं पादः । चन्द्रमाद्विपात् । तस्य पूर्वपक्षापरपक्षौ पादौ ॥ आदित्यस्त्रिपात् । तस्येमे लोकाः पादाः ॥ अग्नेः षट् पादाः । तस्य पृथिव्यन्तरिक्षं द्यौरापश्चोषधिवनस्पतय इमानि भूतानि पादाः । तेषां सर्वेषां वेदा गतिरात्मा"—इति सूर्यस्य अग्नेश्च संबन्धेन लोकत्रयाख्यानात् सूर्येऽपि त्रैलोक्यमुपपद्यते पृथिव्यां चेति बोध्यम् । वायुश्चन्द्रस्यात्यन्तं विक्रमते । इतरसर्वग्रहापेक्षया चन्द्रस्यात्यन्तशीघ्रचारितया वायुसंचाराधिक्योपपत्तेः । वायुश्चन्द्रे नास्तीति केचिदद्यतना आहुस्तदज्ञानात् । वायोः सर्वाकाशपरिव्यापितया चन्द्रेपि संभवात् । वायुं विना चन्द्रगत्यसंभवाच्च ॥ चन्द्र आदित्यं पश्चात् परिक्रमते । पश्चादित्युक्त्या सूर्यपरिक्रमणात् प्राक् पृथ्वीपरिक्रमणं लभ्यते । तदेव स्पष्टयति परवाक्येन द्विपादेति । चन्द्रः पृथिव्या अधिकं विक्रमते पृथ्वीमपरित्यज्यादित्यमभिक्रमते इत्यर्थः ॥ अग्निचन्द्रसूर्यास्त्रयोऽपि पिण्डा वायोः शरीरमुपाश्रयन्ते । आकाशस्थत्वाद् वायुना पर्याप्रियन्ते इति मन्त्रार्थः ॥

| सूर्ये | | |
|---|---|---|
| ज्योतिः — | गौः — | आयुः |
| अग्निः — | इन्द्रः — | विश्वेदेवाः |
| गायत्रं — | त्रैष्टुभं — | जागतम् |
| तापः — | प्रकाशः — | उच्छिष्टं |
| यजुः — | वेदः — | लोकः |
| परिवारः — | दृश्यता — | भोग्यता |
| बृहत् — | वैराजम् — | रैवतम् |

† ऐतरेय ब्राह्मणोक्तं (१८ अ.) त्रैलोक्यं सूर्यापेक्षया द्रष्टव्यं नतु पृथिव्यपेक्षया । उत्तरस्त्र्यह इत्युक्तेः ॥ ज्योतिर्गौरायुरिति स्तोमैर्यन्ति "अयं वै लोको ज्योतिः, अन्तरिक्षं गौः, असौ लोक आयुः । स एवैष उत्तरस्त्र्यहो ज्योतिर्गौरायुरिति त्रीण्यहानि"—इत्याद्यभिप्लवषडहव्याख्याविका ऐतरेयश्रुतिरत्र द्रष्टव्या । (ऐ. ब्रा. १८ अ.)

ज्योतिस्तदग्निस्त्वथ विश्वदेवा आयुश्च गौरिन्द्र इति प्रविद्यात् ॥१४॥
अग्निस्तु सर्वा अपि देवताः स्युः सर्वास्तथेन्द्रोऽपि च देवताः स्युः ॥
विश्वे च देवा अपि देवताः स्युर्देवा हि ते ये दिवमाश्रयन्ते ॥ १५ ॥
देवस्वरूपप्रतिपत्तिहेतुश्छन्दो विनैतेन न रूपसिद्धिः ॥
गायत्रमग्नेरथ वैश्वदेव्यं स्याज्जागतं त्रैष्टुभमैन्द्रमिष्टम् ॥ १६ ॥
तापोऽस्ति यावान् स तदग्निभागो यावान् प्रकाशः स तदिन्द्रभागः ॥
तद्वैश्वदेव्यं तु यतोऽस्य भागाद् भूतानि भूत्वा वहिराभवन्ति ॥ १७ ॥
यावांस्तु तापोऽस्ति ततोऽस्ति यज्ञो यावान् प्रकाशोऽस्ति ततोऽस्ति वेदः।
भूतोद्भवो यावति सोऽस्ति लोकस्त्रिभिः सहस्थैरिदमेकवस्तु ॥ १८ ॥
यावच्च तापोऽस्य चतुर्दिशं ते ग्रहाः क्रमन्ते परिवार्य्य तावत् ॥
प्रकाश एतस्य तु यावदस्ति प्रदृश्यते तावति सोऽवकाशे ॥ १९ ॥
यो भूतभावप्रभवोऽस्य भागः सोऽद्यैत यावत् स तृतीयभागः ॥
* इत्थं त्रिरूपं त्रिविधं पुनः स्याद् भर्गो महश्चाथ यशस्तृतीयम् ॥ २० ॥

---

*"संस्थिते संस्थिते सवने वाचयति —" मयिभर्गो मयी महोमयियशो मयि सर्वमिति। पृथिव्येव भर्गो—ऽन्तरिक्ष एव महो द्यौरेव यशोऽप एव सर्वमिति ॥ १ ॥ अग्निरेव भर्गो वायुरेव मह आदित्य एव यशश्चन्द्रमा एव सर्वम् ॥ २ ॥ वसव एव भर्गो रुद्रा एव मह आदित्या एव यशो विश्वेदेवा एव सर्वम् ॥ ३ ॥ गायत्र्येव भर्गस्त्रिष्टुवेव महो जगत्येव यशोऽनुष्टुवेव सर्वम् ॥ ४ ॥ प्राच्येव भर्गः प्रतीच्येव मह उदीच्येव यशो दक्षिणैव सर्वम् ॥ ५ ॥ वसन्त एव भर्गो ग्रीष्म एव महो वर्षा एव यशः शरदेव सर्वम् ॥ ६ ॥ त्रिवृदेव भर्गः पञ्चदश एव महः सप्तदश एव यशः एकविंश एव सर्वम् ॥ ७ ॥ ऋग्वेद एव भर्गो यजुर्वेद एव महः सामवेद एव यशो ब्रह्मवेद एव सर्वम् ॥ ८ ॥ होतैव भर्गोऽध्वर्युरेव मह उद्गातैव यशो ब्रह्मैव सर्वम् ॥ ९ ॥ वागेव भर्गः प्राण एव महश्चक्षुरेव यशो मन एव सर्वम् ॥ १० ॥ स यदाह मयि गर्भ इति—पृथिवीमेवैतं लोकानामाह, अग्निं देवानाम्, वसून्देवान् देवगणानाम्, गायत्रं छन्दसाम्, प्राचीं दिशाम्, वसन्तमृतूनाम्, त्रिवृतं स्तोमानाम्, ऋग्वेदं वेदानाम्, होत्रं होत्रकाणाम्, वाचमिन्द्रियाणाम्। सवा एष दशधा चतुःसंपद्यते। दश च ह वै चतुर्विराजोऽक्षराणि। तं गर्भा उपजीवन्ति। श्रीर्वै विराद्। यशोऽन्नाद्यम्। श्रियमेव तद्विराजं यशस्यन्नाद्ये प्रतिष्ठापयति ॥ प्रतिष्ठन्तीरिदं सर्वमनुप्रतितिष्ठति ॥ गोपथब्रा. पू. ५ प्र. ॥

भर्गो महो यश इति अभिप्लवानामहांज्योतिर्गवायुषामुच्छिष्टानि प्रवर्ग्याणि। उच्छिष्टाज्जज्ञिरे सर्वे इत्याथर्वणश्रुतिः ॥

| | | | | | | | | | | |
|---|---|---|---|---|---|---|---|---|---|---|
| १ भर्गः | पृथ्वी | अग्निः | वसवः | गायत्री | प्राची | वसन्तः | त्रिवृत् | ऋक् | होता | वाक् |
| २ महः | अन्तरिक्षम् | वायुः | रुद्राः | त्रिष्टुप् | प्रतीची | ग्रीष्मः | पञ्चदशः | यजुः | अध्वर्युः | प्राणः |
| ३ यशः | द्यौः | आदित्यः | आदित्याः | जगती | उदीची | वर्षा | सप्तदशः | साम | उद्गाता | चक्षुः-श्रोत्रे |
| ४ सर्वम् | आपः | चन्द्रमाः | विश्वेदेवाः | अनुष्टुप् | दक्षिणा | शरत् | एकविंशः | ब्रह्म | ब्रह्मा | मनः |
| | १ | २ | ३ | ४ | ५ | ६ | ७ | ८ | ९ | १० |

अग्निः स रूपेण यथा स वायुर्यथाऽयमाश्रित्य इमानि तद्वत् ॥
बृहन् स वैराजसरैवताख्यान्येतानि पृष्ठानि दिवो भवन्ति ॥ २१ ॥
अस्ति त्रयं त्रिष्वपि तत्तथापि ज्योतिःप्रधानं त्रितयं बृहत् स्यात् ॥
वैराजमुत्पश्यति गोप्रधानं प्रधानमायुः खलु रैवते स्यात् ॥ २२ ॥
शुक्लं च कृष्णं च कनीनिका चेत्येवं त्रिवृच्चक्षुरिदं यथास्ति ॥
बृहत् स वैराजस रैवताख्यान्येतानि पृष्ठानि तथा प्रविद्यात् ॥ २३ ॥
शरीरवत् स्याद् बृहदस्य पृष्ठं वैराजपृष्ठं तु निकाय्यवत् स्यात् ॥
स्याद्वाय्वद् रैवतमस्य पृष्ठं प्रत्यर्थमित्थं भवति त्रिपृष्ठम् ॥ २४ ॥
सूर्या अनन्ताः प्रतिभान्ति तेषां संवत्सराः स्युः पृथगस्पृशन्तः ॥
संवत्सरेऽन्यस्य न चान्यसंवत्सरः कदाचित् प्रविशत्यमीषाम् ॥ २५ ॥
येनावकाशेन पृथक्कृत्यमीषाम्संवत्सरस्तद् बृहदस्य पृष्ठम् ॥
अन्तर्बृहत् तस्य परिस्रवं स्याज्ज्योतिर्मयं नाग्निरतो बहिः स्यात् ॥ २६ ॥
वैराजपृष्ठं तु परिस्रवं यत् तद्गोमयं तेन परस्परस्य ॥
संवत्सरेऽन्तर्निहितास्तु सर्वाः संबन्धमायान्ति पृथग्दिवस्याः ॥ २७ ॥
परिस्रवं रैवतपृष्ठमन्यत् तेनान्विताः सन्ति परस्परेण ॥
भुनक्त्यसौ द्यौरितरा दिवस्ता भुञ्जन्त्यमुं ता इतरा दिवोऽपि ॥ २८ ॥
भर्गो महश्चाथ यशश्च मन्ये वीर्याणि चेतानि महस्सु पतान् ॥
सन्ति प्रवर्ग्याणि च तानि तेषां प्रवृञ्जनात् सूर्य उद्भवन्ति ॥ २९ ॥
ज्योतींषि देवा इह गोदुहस्ते गोपाश्च गावो रसभूमयः स्युः ॥
प्राणात्मकप्राण इहायुराख्यः स निश्चयीद्दार्कहृदा ततः स्यात् ॥ ३० ॥
मुनिर्ददर्शैतश आयुरग्नेर्यज्ञस्य तत्प्राहुरयातयामम् ॥
य एतशोऽश्वस्तदभिप्लवो यस्तदाहुरायुर्गवि तत्त्रिविष्टम् ॥ ३१ ॥
सम्यग् विजानाति यदेतशस्य प्रलापविद्यां संहितां शतायुम् ॥
कुर्य्यात् सहस्रायुमिमं मनुष्यं जीवेन्मनुष्यः स हि यावदायुः ॥ ३२ ॥
देवास्त्रयोऽग्नौ वसवोऽष्टरुद्रास्त्वेकादशैते पवनेऽथ सूर्ये ॥
ते द्वादशादित्यगणाः स्युरेवं द्वावश्विनौ चाथ परे विकाराः ॥ ३३ ॥
देवास्त्रयस्त्रिंशदिमेऽथ गावोऽङ्ग्न्यः सहस्रप्रमिता इह स्युः ॥
प्रत्येकमायुर्बृहती सहस्रप्रमाणमायाति मनुष्यदेहे ॥ ३४ ॥
गा अध्यतिष्ठंस्त्रिशतानि त्रिंशत्तिस्रश्च देवा वसवोऽग्निमुख्याः ॥
गास्तावतीर्वायुपराश्च रुद्रा आदित्यवर्गा अपि तावतीस्ताः ॥ ३५ ॥
एका तु याऽसामवशिष्यतेऽन्या सा कामधेनुः सकलार्थदात्री ॥
संवत्सरात्मा प्रथमा तु सैका प्रजज्ञिरेऽन्यास्तत एव सर्वाः ॥ ३६ ॥
गौर्योनिरस्मांसि ततः प्रजज्ञिरे देवा मनुष्याः पितरोऽसुरा इति ॥
दुहन्ति चत्वार इमे च गोरसान् पिबन्ति जीवन्ति च तैरसैरिमे ॥ ३७ ॥
रसाश्चतुर्थाऽन्नरसान् षडाहुर्घृतादयः प्राणरसाः पृथक् स्युः ॥
सुनादयो मूलरसा अनेके रक्तादयो लोहरसा भवन्ति ॥ ३८ ॥
आपोऽमृतक्षारसुराघृतं मधु दध्यम्लतिक्तं तुवरः कटुस्तथा ॥
सूतोऽभ्रकं गन्धक एवमादयो रसास्तु गोभ्योऽहरहः स्रवन्ति हि ॥ ३९ ॥

एभ्यः स्रवद्भ्योऽखिलगोरसेभ्यः सर्वे पदार्थाः प्रभवन्ति पृथ्क्शम् ॥
ज्योतींषि चायूंषि च सर्वदेवा गा एव ता नित्यमिहाश्रयन्ते ॥ ४० ॥
गौः प्राण एषां विधृतिं तमाहुः प्राणो न येषां विधृता न ते स्युः ॥
अघ्न्यास्ततस्ता यदि ताहताः स्युर्ज्योतींषि चायूंषि हतानि च स्युः ॥ ४१ ॥
आत्माखिलानामयमिन्द्र एष व्युच्छिद्यते चेन्न तदायुरस्ति ॥
न ज्योतिरास्ते म्रियते स सद्यस्तस्मादियं गौरभिरक्षणीया ॥ ४२ ॥

ब्रह्मसूर्यसमं ज्योतिर्द्यौः समुद्रसमं सरः ॥
इन्द्रः पृथिव्यै वर्षीयान् गोस्तु मात्रा न विद्यते ॥ ४३ ॥

संख्यानमित्थं तु गवां प्रजापतिः प्रत्याह तद्धस्तु गतिव्यपेक्षया ॥
परानुरोधेन तु तास्त्वनेकधा संख्यां विदुस्तित्तिरयः परेऽपि च ॥ ४४ ॥
ज्योतिर्मयो गोमय एवमायुर्मयस्त्रादित्थं त्रिविधः पृथक् स्यात् ॥
संवत्सरस्तस्य विभक्तयः स्युः पृथक्त्रिविधा एव पृथग्विधस्य ॥ ४५ ॥
* संवत्सरोऽयं किल देवचक्रं परिप्लवं नत्तद् भवं च ॥
त्रिधा विभिन्नं तु परिप्लवं स्यात् त्रिभिर्यदेकं तदभिप्लवं स्यात् ॥ ४६ ॥
† देवास्त्रयस्त्रिंशदवन्त्यमुष्मिन् ज्योतिर्मये तस्य विभक्तयः षट् ॥
भवन्त्यहान्येव हितानि विद्यात् क्रमात् त्रिवृत्पञ्चदशादिकानि ॥ ४७ ॥
त्र्यहादवस्तात् षडहान् स्तुवन्ति यत् ततः क्रमात् पञ्च भवन्ति राशयः ॥
द्विधाविभागात्पुनरत्र मध्यमं स्तुवन्त्यहस्तेन च षड् विभक्तयः ॥ ४८ ॥
त्रिवृत् ततः पञ्चदशोथ सप्तदशैकविंशौ त्रिणवस्ततः स्यात् ॥
अन्त्यस्त्रयस्त्रिंश इति क्रमेण स्तोमा हि पृष्ठ्याः कथिताः षडेते ॥ ४९ ॥
रथन्तरं यच्च बृहद्विरूपं वैराजकं शाक्वररैवते च ॥
एतानि सामानि भवन्ति पृष्ठान्येभिर्हि पृष्ठ्यानि कृतानि तानि ॥ ५० ॥

---

* 'देवचक्रं वा एतत् परिप्लवं यत् संवत्सरः । तदमृतत्वम् । तस्मिन्नेतत् षट्नयमन्नाद्यं- ग्राम्याश्च पशव आरण्याश्च । ओषधयश्च वनस्पतयश्च । अप्सु चरं च परिप्लवं च । तद्देवाःसमारुह्य सर्वान् लोकाननु परिप्लवन्ते-देवलोकं, पितृलोकं, जीवलोकमिममपोदकमग्निलोकं,ऋतधामानं वायुलोकमपराजितमिन्द्रलोकमधिदिवं, वरुणलोकं प्रदिवं, मृत्युलोकं रोचनं, ब्रह्मणो लोकं नाकं सहमं लोकानाम् । तद्यदभिप्लवमुपयन्ति संवत्सरमेव तद्यजमानाः समारोहन्ति'

(कौ. ब्रा. २० । १)

† "त्रयस्त्रिंशद्वै देवाः-अष्टौ वसवः, एकादशरुद्राः, द्वादशादित्याः, प्रजापतिश्च वषट्कारश्च"

(ऐ. ब्रा. २।१८।३७)

"त्रयस्त्रिंशद्वै सोमपा देवताः-याः सोमाहुतीरन्वायत्ताः । अष्टौ वसवः, एकादश रुद्राः, द्वादशादित्याः, इन्द्रो द्वात्रिंशः । प्रजापतिस्त्रयस्त्रिंशः ॥" त्रयस्त्रिंशत् पशुभाजनाः ॥ ता उभय्यः प्रीता भवन्ति । इन्द्राग्नी वै सर्वे देवाः ॥ (कौ. ब्रा. १२।६) ॥

बृहच्च वैराजकरैवते च त्रीण्यत्र पृष्ठानि दिवः प्रविद्यात् ॥
रथन्तरादीन्यपराणि तानि त्रीण्येव पृष्ठानि भवन्ति पृथ्व्याः ॥ ५१ ॥
बृहन्ति तु त्रीणि मनांसि विद्याद् रथन्तरादीनि भवन्ति वाचः ॥
एकैकमेषां तु रथन्तराणामेकैकमन्येष्वतिमन्यते तत् ॥ ५२ ॥
त्रिधा च भूमिः पृथिवी यथा द्यौर्वाग् गौरथ द्यौरिति भक्तयोऽस्याः ॥
वाचो हि भूतानि च पञ्चगावः कृष्णा अथ द्यौरिह भूतदेहाः ॥ ५३ ॥
देवा मनुष्याः पितरोऽसुराश्चेत्यम्भांसि तु धा इह संप्रतीयात् ॥
आपोऽमृतक्षारसुरादयो ये रसाश्च भूतानि तु तानि विद्यात् ॥ ५४ ॥
देवाश्च भूतानि च खृष्टयः स्युर्भूतेषु देवाः समधिष्ठिताः स्युः †
अमुत्र देवा इव भूतसंघा इहोल्वणाः सन्ति तिरस्ततोऽन्ये ॥ ५५ ॥
आमुष्मिका वा पुनरैहिका वा विपर्य्ययन्तेऽपि परस्परेण ॥
अन्योन्यमेषां परिवर्तनं यत् स्वाभाविकं स्यादपि कृत्रिमं तत् ॥ ५६ ॥
देवस्वरूपप्रतिपत्तिहेतुश्छन्दो विनैतेन न रूपसिद्धिः ॥
वाचामनुष्टुप् हि गवां तु पङ्क्तिर्द्यवामतिच्छन्द इति स्मरन्ति ॥ ५७ ॥
यो भूतभावः प्रथमः स भागो मूर्दृश्यते यावदयं द्वितीयः ॥
तापस्तृतीयस्तमभिप्रपत्तुं भौमोऽग्निरूर्ध्वं ज्वलिति प्रसह्य ॥ ५८ ॥
यावत् स आद्यः स इहाग्रभागः पश्यन्ति यावद्भुवमाप एताः ॥
तेजः परस्ताच्च तृतीयभागः संस्था पृथिव्या एवविपर्य्ययेण ॥ ५९ ॥
लोकः पुरस्तात् परतोऽस्ति वेदो वेदाच्च यज्ञोऽहरहः प्रवृत्तः ॥
पृष्ठान्यथ त्रीणि रथंतरं च वैरूपमूर्व्या अपि शाकरं च ॥ ६० ॥
अमुत्र पश्यामि यथा त्रिधा कृतानिहापि पश्यामि तथा त्रिधा कृतान् ॥
अन्यानि रूपाण्यपि च त्रिधा त्रिधा सर्वत्र पश्यामि तदन्वयादिव ॥ ६१ ॥

---

* इयं वाचरथन्तरमसौ बृहत् ( तै. सं. ३। १। ७ )।
गायत्री च त्रिष्टुप् चेति सप्तपदा शक्वरी। ( तै. सं. २। ६। २ )

उभे बृहद्रथन्तरे भवतः। इयं वाव रथन्तरम्। असौ बृहत्। आभ्यामेवैनमन्तरेति। वाचश्च मनसश्च। प्राणाच्चापानाच्च। दिवश्च पृथिव्याश्च। सर्वस्माद्वित्ताद् वेद्यात्॥ ( तै. ब्रा. १।४।६ )

यद्वै रथन्तरं तद्वैरूपं, यद् बृहत् तद्वैराजम्। यद्रथन्तरं तच्छाक्वरं, यद् बृहत् तद्रैवतम्। ( ऐ. ब्रा. १७ अ. )। बृहच्च वा इदमग्ने रथन्तरं चास्तां। वाक् च वैतन्मनश्चास्ताम्। वाग् वै रथन्तरं मनो बृहत्। तद् बृहत्पूर्वं ससृजानं रथन्तरमत्यमन्यत। तद्रथन्तरं गर्भमधत्त, तद्वैरूपमसृजत। ते द्वे भूत्वा रथन्तरं च वैरूपं च बृहदत्यमन्येताम्। तद्बृहद्गर्भमधत्त, तद्वैराजमसृजत, ते द्वे भूत्वा बृहच्च वैराजं च रथंतरं च वैरूपं चात्यमन्येताम्। तद्रथन्तरं गर्भमधत्त, तच्छाक्वरमसृजत। तानि त्रीणि भूत्वा रथन्तरं च वैरूपं च, शाक्वरं च, बृहच्च वैराजं चात्यमन्यन्त। तद्बृहद्गर्भमधत्त। तद्रैवतमसृजत। तानि षट् पृष्ठान्यासन्। ( ऐ. ब्रा. १९ अ. )

† सूर्य्योद्भूता ज्योतिष्मन्त आग्नेयाः प्राणाः देवाः ॥ १ ॥ चन्द्रोद्भूता ज्योतिष्मन्तः सौम्याः प्राणाः पितरः ॥ २ ॥ पृथव्युद्भूतास्तामसाः प्राणा असुराः ॥ ३ ॥ मनुष्यादिशरीरोद्भूतास्तामसाः प्राणा मनुष्या गन्धर्वा वा। जीवानां मनुष्याः। भूतानां गन्धर्वाः ॥ ४ ॥ निर्विशेषाः स्वतः संभूता नित्याः प्राणा ऋषयः ॥ ५ ॥

### तृतीय पृष्ठे



| | | | | | | | | |
|---|---|---|---|---|---|---|---|---|
| | काल | वैगनी | शोण | हिरण्य | पीत | हरित | नील | काल |
| अग्निः | | | | | | | | |
| सोमः | | | | | | | | |
| | पीत | हरित | नील | कालः | वैगनी | शोण | हिरण्य | |

### ४० पृष्ठे



### ४२ पृष्ठे






आयाति चार्वाग् भवति प्रयाति पराग् भवत्येतद्विहैकरूपम् ॥
अथ द्वितीयं स्थितमस्ति रूपं यस्मै न चार्वाक् न पराक् प्रपत्तिः ॥ ६२ ॥
रूपं तृतीयं चलतां समानोदर्कं न चेत् पृष्ठपुरोगतिः स्यात् ॥
रूपत्रयं यद् यदि तद्वदेव त्रयं प्रविद्यात् पृथिवीविभागे ॥ ६३ ॥
अथो करिष्यत् प्रथमं स्वरूपं कुर्वत्पुनर्मध्यममस्ति रूपम् ॥
कृतं तदन्त्यं तदिदं त्रिधा यद्दिव्येवमेतत्पृथिवीविभागे ॥ ६४ ॥
ऋतुत्रयं चाग्निकृते वसन्तो ग्रीष्मोऽथ वर्षा ऋतुरेप शुक्लः ॥
ऋतुत्रयं तत्क्षयकृत् शरद्वा हेमन्त एवं शिशिरः स कृष्णः ॥ ६५ ॥
प्रातश्च मध्यन्दिनमत्र सायं त्रीएयेव लोके सवनानि सन्ति ॥
बाल्यं च तारुण्यमथो जरा वा सर्वत्र सन्ति त्रिविधा अवस्थाः ॥ ६६ ॥
अयं च लोकोऽथ यदन्तरिक्षं ह्यसौ च लोकस्त्रय एव लोकाः ॥
यावन्ति चैवं त्रिविधानि लोके सर्वाणि वाक्प्राणमनःकृतानि ॥ ६७ ॥
आमुष्मिकाण्येवमिह त्रयाणि त्रयाणि तद्वत्पुनरैहिकानि ॥
षाड्स्त्यहोभिर्यदधाद् विधाता यत्सप्तमं तत्र न कृत्यमासीत् ॥ ६८ ॥
महाव्रतं वा यदि वाऽविवाक्यं स्यात्सप्तमं चाहरिदं भवेच्छ्रीः ॥

---

* ऐतरेयब्राह्मणस्य विंशाध्यायादारभ्यैतत्प्रकरणं द्रष्टव्यम् ॥ पिण्डास्त्रिविधाः—स्वज्योतिषः परज्योतिषः अज्योतिषः । स्वज्योतिषां सूर्यादीनां त्रीणि पृष्ठानि—बृहत्, वैराजं, रैवतमिति । पृष्ठत्रयं साहस्रमुच्यते । तृतीयपृष्ठपर्यन्तं सूर्यात् त्रिजातिका अर्थाः संपृक्ताः संचरन्ति ज्योतींषि च, गावश्चायूंषि च । अहान्येतान्यभिप्लवाख्यानि प्रत्यहं पञ्चपृष्ठास्तोमाः—त्रिवृत् पञ्चदशैकविंशत्रिणवत्रयस्त्रिंशाः । ९ । १५ । २१ । २७ । ३३ । त एव पञ्च देवाः अग्निवाय्वादित्या इति त्रयोऽग्नयः वैश्वदेव्यं वैद्युतमिति द्वौ सोमौ । तावेव चन्द्रदिगाख्यौ सोमौ ॥ सैहस्य चायं सर्वो नाम प्रजापतिः । तस्य त्रयो भागाः—अनिरुक्तः सप्तदशः वषट्कारश्च । साहस्रस्य प्रकृतिरनिरुक्तः, मध्यः सप्तदशः, अवसानो वषट्कारः ॥ तच्छरीरे त्रेधा देवाः ज्योतींषि च गावश्चायूंषि च । ज्योतिर्मया आग्नेयाः, गोमया ऐन्द्राः, आयुर्मया वैश्वदेव्याः ॥ अग्निः सर्वा देवताः, इन्द्रः सर्वा देवताः, विश्वेदेवाः सर्वा देवताः । त्रिवृदग्निर्गायत्रश्छन्दाः । पञ्चदशेन्द्रस्त्रैष्टुभः । एकविंश आदित्यो जागतः त्रिणवः सोम आनुष्टुभः । त्रयस्त्रिंशः सोमोऽतिच्छन्दाः ॥ अष्टौ वसवोऽग्निरिति गायत्रः । एकादश रुद्रा इन्द्र इति त्रैष्टुभः । द्वादशादित्या आदित्य इति जागतः ॥ वसुभिः संभूता द्वादशादित्या वसुमया अष्टविभक्ता भवन्ति ते चान्द्रज्योतिर्मया विश्वेदेवा भास्वरश्चन्द्रः । वसुप्राधान्यादष्टाक्षर आनुष्टुभः । दिक् सोमस्त्वतिच्छन्दाः इति देवछन्दः ॥ एवमज्योतिषां पृथिव्यादीनामपि त्रीणि पृष्ठानि—रथन्तरं वैरूपं शाक्वरमिति । पृथ्वी साहस्रमेतत् । तृतीयपृष्ठपर्यन्तं पृथ्वीतस्त्रिजातिका अर्थाः संचरन्ति—वाग् गौः द्यौरिति । अहान्येतान्याभिप्लविकानि । अभिप्लवश्चक्रपरिवर्तनम् । एकेनाहोरात्रेण संवत्सरेण चैषां परिवर्तनं भवतीत्याभिप्लविकत्वम् ॥ प्रत्यहं पूर्ववत् स्तोमाः, देवाः, देवगणाः, छन्दांसि च ॥ पञ्चस्वपि स्तोमेषु अग्नेः परिस्थितिविशेषा ऋतव उच्यन्ते । त्रिवृत् स्तोमेऽग्नेर्भावो वसन्तः । पञ्चदशान्ते ग्रीष्मः । एकविंशान्ते वर्षाः ॥ अतः परमग्नेः शीर्यतेति शरद्भावः । त्रिणवादूर्ध्वमग्नेर्हीनत्वाद्धेमन्तः । एकैकस्य ऋतोर्द्वासप्तत्यहानि भवन्तीति पञ्चर्तवः ॥ अग्नेरेव शरद्धेमन्तभावौ सोमौ भवतः ॥ अह्नामन्यस्मिन्नर्थे संक्रमणं सवनं तत्त्रेधा—प्रातः माध्यन्दिनं तृतीयं चेति । प्रवृत्तिः, स्थिरीभावेनोपभोगः, निवृत्तिक्रमश्चेति । प्रवेशः, पूर्णाक्रमणं, बहिष्कारश्चेति ॥

अस्मिन्नहन्येव हि भोग्यवस्तु समृद्धिमागात् कृतकृत्य आत्मा ॥ ६९ ॥
सप्ताहतः पूर्णमभूदितीत्थं तत्सृष्टिकर्मेति वदन्ति केचित् ॥
दशाहतस्तु प्रवदन्ति चान्येऽन्ये द्वादशाहेन वदन्ति तद्वत् ॥ ७० ॥
दिवं त्र्यहेणाथ भुवं त्र्यहेण व्यधात् तदित्थं षडहः स पृष्ठ्यः ॥
छन्दोमनाम्ना तु पशूंस्त्र्यहेण सृष्ट्वा कृतार्थो दशमेऽहनि स्यात् ॥ ७१ ॥
अस्याः पृथिव्या उपरिस्थिता ये दूर्वातृणौषध्यचलालयायाः ॥
ये जन्तवः पृश्निवदत्र दृष्टा विधात् पशूंस्तान् क्षितिलोमभूतान् ॥ ७२ ॥
एषां प्रसृष्टिः पृथिवीप्रसृष्टेर्भिन्ना तदित्थं प्रथमं विधाय ॥
द्यावापृथिव्यौ तत एव पश्चात् पशुस्थवाक्प्राणमनांसि चक्रे ॥ ७३ ॥
ये प्रायणीयोदयनीयभूतौ द्वौ चातिरात्रौ पृथगत्र सृष्टौ ॥
प्रारम्भकालोऽव्यवसानकालस्तौ द्वादशाहप्रतिपूरकौ स्तः ॥ ७४ ॥
एकेन चाह्ना दशभिस्त्वहोभिः शतेन चाह्नां च सहस्रकेण ॥
अन्यान्यसृष्टीरसृजद्विधाता सर्वं सहस्रेण तु वत्सराणाम् ॥ ७५ ॥
सृष्टिप्रभेदात्तु तदित्थमह्नां भवन्ति ते ते बहवः प्रभेदाः ॥
तथाप्यहोरात्रकृतैव सृष्टिः सर्वा बभूवेति हि निर्विवादम् ॥ ७६ ॥

| सं. | अहानि | अहर्नामानि | देवाः | छन्दांसि | स्तोमाः | पृष्ठानि | रूपाणि | रूपाणि |
|---|---|---|---|---|---|---|---|---|
| १ | अहः | ज्योतिः | अग्निः | गायत्री २४ | त्रिवृत् ९ | रथन्तरम् १ | करिष्यत् | एति-प्रेति |
| २ | अहः | गौः | इन्द्रः | त्रिष्टुप् ४४ | पञ्चदशः १५ | बृहत् (१) | कुर्वत् | स्थितम् |
| ३ | अहः | आयुः | विश्वेदेवाः | जगती ४८ | सप्तदशः १७ | वैरूपम् २ | कृतम् | समानोदर्कम् |
| ४ | अहः | वाक् | अग्निः | अनुष्टुप् ३२ | एकविंशः २१ | वैराजम् (२) | करिष्यत् | एति-प्रेति |
| ५ | अहः | गौः | इन्द्रः | पंक्तिः ४० | त्रिणवः २७ | शाक्वरम् ३ | कुर्वत् | स्थितम् |
| ६ | अहः | द्यौः | विश्वेदेवाः | अतिच्छंदाः ५२ | त्रयस्त्रिंशः ३३ | रैवतम् (३) | कृतम् | समानोदर्कम् |
| ७ | अहः | श्रीः | श्रीः | श्रीः | श्रीः | श्रीः | श्रीः | श्रीः |

॥ इति सप्ताहाधिकरणम् ॥

## यज्ञाधिकरणम्

त्रैलोक्यमन्तर्भवतीह यस्मिंस्तत्पारमेष्ठ्यं पदमध्यतिष्ठत् ॥
* प्रजापतिस्तंतु वितायमानं त्रयीमयं यज्ञ इति प्रतीयात् ॥ १ ॥
[ शत. ४ कां. ४ प्र. ८ ब्रा. ] तै. ब्रा. १ कां ४ प्र. ६ अ.
प्रजापतेर्यत्प्रथमं स्वरूपं तच्चानिरुक्तं हि ततो निरुक्तम् ॥
स्यात्तच्चतुर्धा प्रविभक्तमीक्षे मूलं च सत्यं च यशुं च यज्ञम् ॥ २ ॥
प्राणा इमे तत्र गतास्तु वाचस्तेजांसि ते ज्योतिषि मानसे स्युः ॥
एते त्रयः संमिलिता इहात्मा प्रजापतिः स प्रथितः स यज्ञः ॥ ३ ॥
प्राणो मनो वागिति मूलरूपं वागेव सत्यं द्विविधं तदिष्टम् ॥
लोकाश्च वेदाश्च पृथक् त्रयस्ते मर्त्या नु लोका अमृता नु वेदाः ॥ ४ ॥

लोकाः—यद्भूर्भुवः स्वस्तदियं त्रिलोकी स्थौल्याच्च सौक्ष्म्याच्च ततोऽपि सौक्ष्म्यात् ॥
पृथ्व्यन्तरिक्षद्युविभागतोऽपि स्थौल्याच्च सौक्ष्म्याच्च ततोऽतिसौक्ष्म्यात् ५ ॥
भूरादिकं तत् त्रिकमन्तरस्तः पृथ्व्यादिकं स्याच्च बहिर्बहिस्तत् ॥
स्थूलेन तु स्थूलमथातिसूक्ष्मेणोहातिसूक्ष्मं समतामुपैति ॥ ६ ॥
यावद्घनं तत्पृथिवीस्वरूपं तेजो द्युरूपं प्रतपत्स्वभावम् ॥
यत्स्पन्दते यत्पवने तदन्तस्तदन्तरिक्षं त्रिषु लोकयन्ते ॥ ७ ॥

वेदाः—स्तोमो यजुश्चेत्यथ सामऋक् च रथन्तरं नाम बृहच्च तद्वत् ॥
विद्यात्रयीयं प्रथते तदंशं ताः प्राणकल्पा अमृताहि वाचः ॥ ८ ॥
विद्यात्रयी साम यजुश्च ऋक् च त्रय्यां हि भूतान्यखिलानि सन्ति ॥
[ शत. १०।३।१ ]
त्रयीन्तु विद्यामिह सत्यमाहुः तत्तायते सत्यमितो हि यज्ञात् ॥ ६ ॥
[ शत. ६।४।२ ]
वेदत्रयी वागियमस्ति सर्वा वेदास्त्रयो यावति तावति स्यात् ॥
प्राणात्मयज्ञोऽयमथास्य योनिर्वेदस्य वेदास्त्रय आशयश्च ॥ १० ॥
† यज्ञो हि वेदाशय एष योनिर्वेदत्रयस्येत्यथवा वदामः ॥
विद्या त्रिधातुस्त्वियमाशयेऽस्मिन् शेते त्रिधातुस्तत एष यज्ञः ॥ ११ ॥
[ शत. ५।४।७ ]
वेदैर्हि यज्ञं तनुते यजुर्भिस्त्वग्रेऽथ ऋग्भिस्त्वथ सामभिस्तु ॥
यज्ञस्य रूपं क्रियते त्रयस्ते वेदास्त्रयीरूपमथैष यज्ञः ॥ १२ ॥

वेदत्रयी वागियमस्ति तत्र प्राणः स वाचैव तया त्रिलोकीम् ॥
उत्पादयन् विक्रमते त्रिधासौ त्रिविक्रमो विष्णुरतः स उक्तः ॥ १३ ॥

---

* प्रजापतिर्वा एष वितायते यद्यज्ञः । तै. ब्रा. १।४।६ ॥

† यज्ञो वै विष्णुः । स देवेभ्य इमां विक्रांतिं विचक्रमे येषामियं विक्रान्तिः । इदमेव प्रथमेन पदेन पस्पार । अथेदमन्तरिक्षं द्वितीयेन । दिवमुत्तमेन । एतामेवैष एतस्मै विष्णुर्यज्ञो विक्रान्तिं विक्रमते ॥

दिवं महोक्थेन महाव्रतेनान्तरिक्षमाप्नोद्दिममग्निना च ॥
पृथ्वी चितोऽग्निर्महदुक्थमस्ति द्यौरन्तरिक्षं तु महाव्रतं स्यात् ॥ १४ ॥
यावन्महोक्थं सऋचां समुद्रो महाव्रतं साम समुद्र एषः ॥
अग्निस्त्वमीषां यजुषां समुद्रस्त्रयः समुद्रा इह देवलोकाः ॥ १५ ॥
छन्दांसि तानन्वथ तानि चानु लोकाश्च लोकाननु चायमात्मा ॥
एकैक आत्माऽयमतः शरीरी पृथक् समुद्रैः क्रियते समुद्रः ॥ १६ ॥
यज्ञेषु यज्ञः प्रवतेऽधिरूढो देवेषु देवोऽहरहःसु तद्वत् ॥
यथाह्निकं मासिकमेष संवत्सरो यथाहानि महाव्रतं तत् ॥ १७ ॥

वायुश्च पञ्चाधिगतोऽस्ति देवान् महत्तदुक्थं प्रतिपादयामः ॥
आख्यायतेऽशीति वशान्महोक्थं तत्रायमर्को ध्रुवमग्निरास्ते ॥ १८ ॥
अर्चन् महोक्थे चरतीह सोऽर्कोऽशीतिं स आप्नोति ततोऽयमात्मा ॥
अशीतिरन्नं ये इहान्नभोक्ता सोऽर्कः स उत्तिष्ठति नित्यमुक्थात् ॥ १९ ॥
प्रजापतिर्यावदयं पुरासीद् भूतानि भूत्वा स बभूव रिक्तः ॥
प्राणा हि यावन्त इमान्यभूवन् भूतानि भूतेष्वणुतामगुस्ते ॥ २० ॥
प्रजापतिः सोऽशयदत्र पृथ्वी भूतस्ततस्तं दिव एत्य देवाः ॥
संभृत्य तद्भूतरसं हि तेजस्तेनाभिषज्यन् स महानवर्ति ॥ २१ ॥
संवत्सरं यत्परिपच्यतेऽन्नं महद्व्रतं तत्सम आर्पुरस्मै ॥
इन्द्रः प्रजेशः स महांस्ततोऽभूत् तस्य व्रतं तद्धि महाव्रतं स्यात् ॥ २२ ॥
महाव्रतं यत् तदहः प्रसिद्धं तदन्नमैन्द्रं बृहतीसहस्रम् ॥
अशीतयस्ताः प्रभवन्ति ताभिर्महोक्थमाख्यायत इत्यवेहि ॥ २३ ॥
प्रत्येकमाहुर्बृहतीषु षट्त्रिंशदक्षराण्येव तदक्षरं तु ॥
विराडिहाग्निः स दशाक्षरः स्यात् त्रीण्यत्र तत् षट्त्रिंशतान्यहानि ॥ २४ ॥
प्राणो हि तस्माद् बृहतीसहस्रात् संपद्यमानात् परतोऽस्ति सोऽयम ॥
प्रज्ञामयो ब्रह्ममयोऽथवा स्यात्स देवतात्माऽप्यथवाऽमृतात्मा ॥ २५ ॥
अग्निर्यजुः स्यादिह चीयते यो वयोविधोऽग्नौ गरुडः सुपर्णः ॥
अङ्गानि चास्येह वयोविधानि संवत्सरोनाम प्रजापतिः सः ॥ २६ ॥
स संस्यते तस्य रसोऽग्र मागान्महत्तदुक्थं प्रतिपादयामः ॥
रसं तमस्याप्यनुयात्यृचा च साम्ना च भूयो यजुरेति चाग्रे ॥ २७ ॥

लोके विलोके न महाव्रतं तन्नाद्धा विलोके महदुक्थमेतत् ॥
अग्निं तु पश्यामि स एष आत्मा रसस्तु भूत्वाग्निमपीत एते ॥ २८ ॥
ऋक्सामयोरत्र यजुःष्वपीतिर्यजुस्तदाश्रित्य हि ते भवेताम् ॥
उत्पद्यते यत्र यजुर्नवीनं तत्रर्क् च सामापि नवे भवेताम् ॥ २९ ॥

सूर्ये त्रयीं तावदुदाहरामो यन्मण्डलं भाति महत् तदुक्थम् ॥
यदर्च्यतेऽर्चिस्तु महाव्रतं तद् यन्मण्डलेऽस्मिन् पुरुषोऽस्ति सोऽग्निः ॥३०॥
"ऋग्भिः पूर्वाह्णे दिवि देव ईयते यजुर्वेदे तिष्ठति मध्ये अन्हः ॥
"सामवेदेनास्तमये महीयते वेदैरशून्यस्त्रिभिरेति सूर्यः ॥ ३१ ॥
(तै. सं. ४ । ३ । ११ भाष्ये श्रुतिः)

इत्येवमन्यैर्यदुदाहृतं प्राक् तत् कल्पनामात्रमसारमुक्तम् ॥
वेदैरशून्यास्त्रिभिरेष सूर्य्यः प्रातश्च सायञ्च दिवा च नक्तम् ॥ ३२ ॥
अस्यैव विद्या तपतीयमेषा यो मण्डलेऽस्मिन् पुरुषः स मृत्युः ॥
यद्दीप्यतेऽर्चिस्त्वमृतं तदेतत्त्वेष मृत्युर्म्रियतेऽमृतस्थः ॥ ३३ ॥
"अन्तरं मृत्योरमृतं मृत्यावमृतमाहितम् ॥
मृत्युर्विवस्वन्तं वस्ते मृत्योरात्मा विवस्वति" ॥ ३४ ॥
तदर्चिपस्तत्पुरुषस्य चैतद्यन्मण्डलं सा भवति प्रतिष्ठा ॥
उक्थे महत्येव महाव्रतं स्यादग्निश्च सर्वत्र तथेति विद्यात् ॥ ३५ ॥

अग्निर्द्विधाऽस्त्याहवनीय एकः प्राणश्चितेऽग्नौ सति धीयतेऽग्निः ॥
यश्चीयतेऽग्निः स हि वाग् यजुर्यत् स पूरुषोऽस्मिन् पुरुषाश्च सप्त ॥ ३६ ॥
चत्वार आत्मा पुरुषा अथ द्वौ पक्षावथैकः पुरुषोऽस्ति पुच्छम् ॥
तैः सप्तभिर्यः पुरुषः स एकः प्रजापतिः श्रीभिरमुष्य शीर्षम् ॥ ३७ ॥
ऋक्सामयोर्नोत्क्रमणं कदाचित् ते नान्नमन्यस्य तयोश्च नान्नम् ॥
अग्निस्तु वागन्नमतः स गच्छत्युत्क्रम्य तृप्तिं कुरुते परस्य ॥ ३८ ॥
चित्तस्य वाचश्च य उत्तरोत्तरक्रिमः स यज्ञो मत ऐतरेयके ॥
मनोऽस्ति वाचो मनसोऽहि वागियं प्राणस्य यज्ञस्य हि ते सुवर्तनी॥ ३९ ॥
खेभ्यः पराङ्वाहितचैत्ततेजो रुद्धं विरुद्धं चरदस्तितार्थाः ॥
अस्तित्वधीकल्पकवस्तुधर्मो वेदोऽथ वेदोद्भवकृद्धि यज्ञः ॥ ४० ॥
सोमोऽमृतं सोम विना कृतं त्वन्नं सोमेन सोमो यदि हन्यते बलात् ॥
तस्मिन् सहस्यग्निरुदेति सोमजो यतः सहो यज्ञमिमं प्रचक्षते ॥ ४१ ॥
* अग्नौ कृतोऽग्नित्वमुपैति सोमः स चाग्निरन्नान् म्रियते स सोमः ॥
( बृहज्जाबालोप. २ ब्रा. )
अग्निश्च सोमश्च विपर्य्ययेते यतो मिथो यज्ञमिमं वदामः ॥ ४२ ॥
प्रजापतिस्तायत एष यज्ञः प्रजाः प्रजातास्तत एव सर्वाः ॥
( तै. ब्रा. १।४।६ )
यज्ञं तमेवान्वखिला इदानीमपि प्रजायन्त इति ब्रवीमि ॥ ४३ ॥
( शत. ४ का. ४ प्र. ८ ब्रा. )
प्रजास्तु देवा वसवोऽष्ट रुद्रा एकादश द्वादश चादितेयाः ॥
द्यावापृथिव्यौ च तदित्थमेते देवास्त्रयस्त्रिंशदिमे प्रसिद्धाः ॥ ४४ ॥
प्रजापतीन्द्रौ च वषट्कृतीन्द्रौ प्रजापतिः सोऽनु वषट्कृतिर्वा ॥
अहश्च रात्रिश्च तथाश्विनौ वा द्यावापृथिव्यौ च मतानि षोढा ॥ ४५ ॥

---

* अग्नेरमृतनिष्पत्तिरमृतेनाग्निरेधते । अत एव हविः क्लृप्तमग्नीषोमात्मकं जगत् १
ऊर्ध्वशक्तिमयः सोमो ह्यधः शक्तिमयोऽनलः ॥ ताभ्यां संपुटितं तस्माच्छश्वद्विश्वमिदं जगत् २
अग्निरूर्ध्वं भवत्येष यावत्सौम्यं परामृतम् ॥ यावदग्न्यात्मकं सौम्यममृतं विसृजत्यधः ३
अतएव हि कालाग्निरधस्ताच्छक्तिरूर्ध्वगा ॥ यावदादहनश्चोर्ध्वमधस्तात्पावनं भवेत् ४
आधारशक्त्यावधृतः कालाग्निरयमूर्ध्वगः । तथैव निम्नगः सोमः शिवशक्तिपदास्पदः ५
बृहज्जाबालोपनिषदि द्वितीयब्राह्मणम् ।

अग्रे तु देवा अपि यज्ञियास्ते सर्वेऽपि पुरुषाः सदृशा इवासन् ॥
तेषामतिष्ठावतया त्रयः प्रागग्नीन्द्रसूर्या अभवन् प्रतीताः ॥ ४६ ॥
भ्राजस्तु सूर्ये समभूदथेन्द्रे त्वोजोऽथ वर्चः समभूदिहाग्नौ ॥
तैरेव वीर्यैरभवन्नतिष्ठावानः पृथक् तेऽखिलदेवमुख्याः ॥ ४७ ॥
अग्निश्च यज्ञे प्रथमोऽस्त्यमीषां विष्णुस्तथैषां परमो निविष्टः ॥
तावग्निविष्णू भवतोऽन्त्यतन्वौ यज्ञस्य देवास्तु तदन्तरे स्युः ॥ ४८ ॥
[ऐ. ब्रा. १।१।१] [शत. ८।२।७।१६]

सर्वे त्रयस्त्रिंशदिमे तथैकं रूपं प्रकुर्वंति प्रजापतिः सः ॥
इत्थं चतुस्त्रिंशदमुष्य यज्ञस्यैताः खलु व्याहृतयो भवन्ति ॥ ४९ ॥
[शत. ४।४।८]

यज्ञस्य पर्वाणि च यज्ञतन्वश्चैता भवन्तीति स तायमानः ॥
प्रजापतेरप्यनिरुक्तरूपस्येदं निरुक्तं भवति स्वरूपम् ॥ ५० ॥
* इन्द्रोऽनिरुक्तः सहि गर्भचारी सर्वो वषट्कार इतोऽयमन्यः ॥
† असौ तु वौक् षड्ऋतवस्तदेषु स्थितं त्वमुं प्राह वषट्पदेन ॥ ५१ ॥
ऐ॰ ब्रा॰ २१। ऐ. ब्रा. ११। ६ ॥

त्रिभ्यः परस्तादपि षट् च षट् न स्वर्योऽर्यमन्यत् त्विति भक्ष्यः षट् ॥
स्तोमैः षडङ्गा क्रियते तु या वागोगर्भिता वौषडियं वषट् स्यात् ॥ ५२ ॥
शत. ११।५।५।२१

प्राणो मनश्चेत्युभयं तु वाचोऽन्तःस्थं वस्न्त्यो इति साम्यतेतोः ॥
प्राणोऽयमुः स्याद इदं मनः स्यात् तद्गर्भिता वागियमस्ति वौषट् ॥ ५३ ॥
वाक् सा मकारेण नियुज्यते चेत् तदोमिति स्यादिह यज्ञसंज्ञा ॥
स्थूलो मकारोऽणुरन्तरङ्गोऽणीयानकारस्त्रिभिरोमिति स्यात् ॥ ५४ ॥
‡ कौषीतकिः प्राह विना मकाराद्योकारमात्रं प्रणवं प्रतीयात् ॥
ओश्रावयेत्यादिषु तत्प्रतीतेरथावसाने समकार एषः ॥ ५५ ॥

---

* वषट्कारो वै गायत्र्यै शिरोऽच्छिनत्। तस्यै रसः परापतत्। तं बृहस्पतिरुपागृह्णात्। सा शितिपृष्ठा वशाऽभवत् ॥ १ ॥ यो द्वितीयः परापतत्। तं मित्रावरुणावुपागृह्णीताम्। सा द्विरूपा वशाऽभवत् ॥ २ ॥ यस्तृतीयः परापतत्। तं विश्वेदेवा उपागृह्णन्। सा बहुरूपा वशाऽभवत् ॥ ३ ॥ यश्चतुर्थः परापतत्। पृथिवीं प्राविशत्। तं बृहस्पतिरभ्यगृह्णात्। अस्त्वेवायं भोगायेति। स उक्षवशः समभवत् ॥ ४ ॥ यल्लोहितं परापतत्। तद्रुद्र उपागृह्णात् सा रौद्री रोहिणी वशाऽभवत् ॥ ( उक्षवशोऽन्यर्थवीर्यो वृषभः ) ॥ यो रसः पृथिवीं प्राविशत् ततः खदिरादयो वृक्षा अभवन् ॥

† सर्वे वौगिति करोति। वाग् वै षट्कारः षडिति। ऋतवो वै षट्। शत॰ १।५।२।२१ ॥ ऐतरेयके ब्रा.। अ. ११। खं. ५-६ ॥ असौ वाव वौ ऋतवः षट्। एतमेव तदृतुष्वादधाति। देवपात्रम् वा एतद् यद्वषट्कारः ॥ ११। ५-६ ॥

‡ कौषी. ब्रा. ११ अ.। ५ खं. ॥

युञ्जीत काम्ये प्रणवं प्रयोगे कामः प्रजा चेद्मकारमेव ॥
कामः प्रतिष्ठा यदि तर्हि मान्तं कौपीनकीये विदुरित्यमेके ॥ ५६ ॥
मध्येतु शस्त्रेऽनुवचस्यपीत्थं विशुद्ध एव प्रणवः प्रयोज्यः ॥
अथावसाने मकृतावसानः कौपीतकीया अपि चेत्थमाहुः ॥ ५७ ॥
या वाक् प्रतीकः प्रणवेन युक्तो वौरेष वाक् प्राणमनोमयोऽर्थः ॥
सूर्य्यः स संवत्सरमध्यवर्ती संवत्सरः षट् त्वृतवः स वौषट् ॥ ५८ ॥
प्राणो मनश्चेत्युभयो वकारो मनः परप्राणमिहाचिति स्यात् ॥
मध्याधिकारे परितो विकारे यश्च विभागाः षडिमे स वौषट् ॥ ५९ ॥
इत्थं प्रसिद्धेन तु देवपात्रं वौषट् पदेन प्रतिपादयन्ति ॥
सर्वेऽपि देवा इह यत्र देवे स्थिता वषट्कारमिमं वदन्ति ॥ ६० ॥
देवा हि संवत्सर एव सोऽग्निः तस्मिन् विभागा ऋतवः प्रसिद्धाः ॥
स्तोमाश्च तस्माद् ऋतवः षडेते सांवत्सरं रूपमिदं प्रतिष्ठा ॥ ६१ ॥
द्यौरन्तरिक्षे तदिदं पृथिव्यां पृथ्वीयमप्स्वाप इमास्तु सत्ये ॥
तद् ब्रह्मणि ब्रह्म तपः प्रतिष्ठं ताः षट् प्रतिष्ठा इह चात्र वौषट् ॥ ६२ ॥
ऐ. ब्रा. ११ । ६ ॥

इमाः प्रतिष्ठा अनु सर्वमस्मिन प्रतिष्ठितं चास्त्वदमेकमेकम् ॥
ओस्यामिमां वाचमिमेऽध्यतिष्ठन् देवाश्च देवान् परमः स आत्मा ॥ ६३ ॥
प्राणोऽप्यपानोऽपि च वागपीमे युक्ता वषट्कार इति प्रविद्यात् ॥
ओजः सहश्चेति समृद्धिहेतू उभे वषट्कारतनू भवेताम् ॥ ६४ ॥
ऐ. ब्रा. ११ । ७ ॥

वज्रश्च धामच्छदयं च रिक्तश्चेत्थं वषट्कार इह त्रिधा स्यात् ॥
वज्रः स उच्चैर्बलितः शनैश्चोद्रिक्तः स धामच्छदयं समश्चेत् ॥ ६५ ॥
ऐ. ब्रा. ११ । ८ ॥

वसूंश्च रुद्रानपि चादितेयानिन्द्रं वषट्कारमपि प्रवन्ति ॥
देवास्त्रयस्त्रिंशदिमे समेता मर्त्येऽमृतास्तैरिदमस्ति मर्त्यम् ॥ ६६ ॥
यदस्ति किञ्चित् तदिदं हि रूपं तच्चामृतं यच्चमृतं तदस्ति ॥
एतद्धि मर्त्यं न विनामृतेन मर्त्यं न मर्त्यं न विनाऽमृतं स्यात् ॥ ६७ ॥

प्राणा हि देवाः प्रति यज्ञमेते समानशब्दा अपि भिन्नभिन्नाः ॥
य एक यज्ञेऽन्नभुजः प्रतीतास्तेऽन्नानि चान्यत्र भवन्ति यज्ञे ॥ ६८ ॥
प्राणस्य चान्नस्य च तद्वदूर्जोऽन्योन्यग्रहोऽन्योन्यसमुद्भवश्च ॥
स्यात्कर्मणा येन स यज्ञ उक्तो यज्ञा हि यज्ञात् प्रभवन्ति सर्वे ॥ ६९ ॥
प्राणं तमन्नादमिहाग्निमाहुर्यदन्नमाहुयत एष सोमः ॥
सोमो हुतस्तूर्क् प्रभवेत् ततोऽन्यः प्राणो भवेदन्नमथोर्क् च तद्वत् ॥ ७० ॥
प्रजापतेः स्रस्ततनोर्हि मध्यादुत्क्राम्यतोऽन्नैर्ग्रहणं यतोऽस्ति ॥
प्राणस्ततोऽन्नेन भवेद्गृहीतः स एवहि प्राणिति योऽन्नमत्ति ॥ ७१ ॥
अन्नं यदोत्क्रामति वा तदानीं प्राणेन गृह्णाति तदन्नमस्मिन् ॥
प्राणेन पश्यामि ततोऽन्नमात्तं य एवहि प्र णिति सोऽन्नमत्ति ॥ ७२ ॥

ऊर्ग् वा यदोत्क्रामति तामगृह्णात् ताभ्यामुभाभ्यामत एव ताभ्याम् ॥
अस्त्यूर्ग् गृहीता य इहान्नमत्ति स प्राणितीहोर्जयतीदमेतम् ॥ ७३ ॥
प्राणान्नयोरुत्क्रमणेऽप्यगृह्णादूर्जैव ते तेन च ते गृहीते ॥
ऊर्जायमेवोर्जयतीह लोके स एवहि प्राणिति सोऽन्नमत्ति ॥ ७४ ॥
अन्योन्यतस्तानि ततो गृहीतान्येकत्र सन्त्यात्मनि संनिपत्य ॥
तदन्नमस्मिन् प्रतिपद्यमानं सर्वेऽपि देवाः स्युरनुप्रपन्नाः ॥ ७५ ॥

"इदं स प्राणोऽभवन्महान् भूत्वा प्रजापतिः ॥
भुजो भुजिष्या वित्वा यत् प्राणान् प्राणयत् पुरि ॥ ७६ ॥"

प्रजापतेर्नश्यति यावदुत्क्रमे संस्कुर्वते तावदिमं दिवौकसः ॥
तन्मध्यतः सर्वमिदं हितेऽदधुः प्राणं तथान्नं च तथोर्जमीदृशीम् ॥ ७७ ॥
अग्नौ चितेऽग्निस्तु निधीयते यः प्राणः स वाचि प्रतितिष्ठतीह ॥
स गार्हपत्याहवनीयधिष्ण्यात्मको विराडग्निरिहास्ति यज्ञः ॥ ७८ ॥
इदं शिरोऽत्रैव तु हूयतेऽन्नं देवेभ्य एभ्यः शिरसि स्थितेभ्यः ॥
यज्ञो हि देवान्नमतः स यज्ञो यद्धूयते तेन परोऽस्ति यज्ञः ॥ ७९ ॥
यत्किञ्च पश्यामि स एष सर्वो यज्ञः पृथग्वस्तुतयास्ति सिद्धः ॥
प्रत्यर्थमिद्धाग्निषु हूयतेऽन्नं देवेभ्य एभ्यो हि ततोऽस्ति सोऽर्थः ॥ ८० ॥
सूर्यश्च यज्ञः पवनश्च यज्ञो योऽग्निः स यज्ञः पुरुषोऽस्ति यज्ञः ॥
न क्वापि लोके तदहं विलोके वस्त्वस्ति यत् किन्तु न सोऽस्ति यज्ञः ॥ ८१ ॥
अहर्निशं तायत एष यज्ञः संतिष्ठते चाहरहर्नियुङ्क्ते ॥
स्वर्गस्य गत्यै किल यज्ञमेनं यज्ञेन च स्वर्गमुपैति नित्यम् ॥ ८२ ॥
स्वर्गश्च संवत्सरमध्यवर्ती यद् भाः परं दीधितिमण्डलान्तः ॥
स्वर्गः स एवाहवनीय एको वेदाः समुद्रा इति वा त्रयः स्युः ॥ ८३ ॥

वेदिः प्रसिद्धा भवतीह यज्ञे पश्चार्द्धमस्या अनुगार्हपत्यः ॥
पूर्वार्द्धमन्वाहवनीयकुण्डः स्याद्दक्षिणे तत्र च दक्षिणाग्निः ॥ ८४ ॥
स एष सर्वोऽपरगार्हपत्यो वेद्यन्तमन्वर्हति पश्चिमं सः ॥
अन्यस्तु तत्राहवनीयकुण्डः प्राच्यां तयोर्मध्यगता च वेदिः ॥ ८५ ॥
वेद्यां च दर्भाः प्रभवन्ति कुण्डे चेध्मानि देवा इह ऋत्विजः स्युः ॥
दैवोऽयमात्मा यजमान उक्तो ह्यन्नं पुरोडाशवपाज्यसोमाः ॥ ८६ ॥
मध्येऽष्टधिष्ण्याग्नय इत्थमेते दशाग्नयो नाम विराट् स एकः ॥
योऽग्निस्तु तत्राहवनीयनामा तस्मिन् समस्ता इह देवताः स्युः ॥ ८७ ॥
यथा शरीरं पुरुषेऽस्ति वेदिः शिरस्तु तत्राहवनीयकुण्डः ॥
धिष्ण्याग्नयो ह्यथ गार्हपत्यो योन्यादिनाभ्यन्तकृते प्रदेशे ॥ ८८ ॥
योनिप्रदेशस्त्विह गार्हपत्यः स्यान्नाभिरस्याहवनीयकुण्डः ॥
प्रादेशमात्रस्त्विह योऽस्ति गर्भो विष्णुः स उक्तोऽत्र च सास्ति वेदिः ॥ ८९ ॥
इयंहि पृथ्वी प्रथमास्ति वेदिस्तत्पश्चिमे तिष्ठति गार्हपत्यः ॥
प्राच्यां दिशि त्वाहवनीय एष प्रहूयते यत्र च सोमरश्मिः ॥ ९० ॥

पृथ्वी समग्रापि च गार्हपत्यो द्यौः सूर्य्यवत्याहवनीयकुण्डः ॥
धिष्ण्याऽन्तरिक्षं तदिहास्ति वेदिर्यस्तत्र यज्ञस्तदिदं तु विश्वम् ॥ ६१ ॥

यज्ञः स्वयंभूरिह कश्चिदास्ते जुहोत्ययं सर्वहुदात्मनीदम् ॥
तस्माच्च ऋक् साम यजुश्च जज्ञे ततः प्रवृत्ताः सकला हि यज्ञाः ॥ ६२ ॥
प्राणो हि वाचा मनसा च भावितो यज्ञस्वरूपं तनुतेऽथ यज्ञतः ॥
प्राणस्य यो जायत आश्रयः पृथक् स चित्यभूतः स पशुर्हिरण्मयः॥६३॥
स्थूलैस्तु भूतैः कृतरूपमेतत् पश्यामि यत् स्थाष्णु चरिष्णु चेदम् ॥
देहोऽपि लोमत्वगसृङ्मुखाख्यः पशुस्तदन्तर्निहितोऽस्ति सत्यः ॥ ६४ ॥
यज्ञो न चेत्स्यान्न पशुः क्वचित्स्याद् यज्ञोऽपि सोऽयं पशुभिः कृतः स्यात् ॥
पशुर्न चेत्स्यान्न भवेत्स यज्ञो यज्ञेन यज्ञं त्वयजन्त देवाः ॥ ६५ ॥

## इति यज्ञाधिकरणम् ।

अधिदैवतमध्यात्मं च यज्ञो व्याख्यातो गोपथे पू० ४ प्रपाठके—"अयं वै यज्ञो योऽयं प्राणः पवते । तमेत ईप्सन्ति ये संवत्सराय दीक्षन्ते ।... । अयं वै लोको गृहपतिः । अस्मिन् वा इदं सर्वं लोके प्रतिष्ठितम् ॥ १ ॥ चन्द्रमा वै ब्रह्माऽधिदैवं, मनोऽध्यात्मम् । आदित्यो वा उद्गाताधिदैवं चक्षुरध्यात्मम् । पर्जन्य आदित्यः ॥ अग्निर्वै होताधिदैवं वागध्यात्मम् ॥ वायुर्वा अध्वर्युरधिदैवं प्राणोऽध्यात्मम् ।

| | होत्रकाः | अधिदैवम् | अध्यात्मम् |
|---|---|---|---|
| १ | गृहपतिः | प्राणः | प्राणः |
| २ | होता | अग्निः | वाक् |
| ३ | उद्गाता | आदित्यः | चक्षुः |
| ४ | अध्वर्युः | वायुः | प्राणः |
| ५ | ब्रह्मा | चन्द्रमाः | मनः |

## चातुर्होत्राधिकरणम् ।

यद्दीप्यते ज्योतिरदः परोदिवो विश्वस्य पृष्ठेषु बहिरखिलोकतः ॥
यस्य प्रतापात् तपनास्तपन्त्यमी आत्मा न यपोऽस्ति विभुः प्रजापतिः॥१॥
ब्रह्मा मनस्तत्परितः प्रवृत्ताः प्राणा अथैतैः सहितः स यज्ञः ॥
स्तोमास्तु यज्ञाङ्गविभागभूताः प्रवृत्ते त्रिवृत् पञ्चदशादयः स्युः ॥ २ ॥
मनोमयः प्राणमयः स वाङ्मयः प्रजापतिर्यत्परितो वितायते ॥
[ तै. ब्रा. १ का. ४ प्र. ६ अ. ]
तमेव यज्ञं प्रवदन्ति हूयते स्तोमेष्वहः स्वात्मविशेषसंपदे ॥ ३ ॥
स्तोमा इमे ब्रह्मण एव तस्य प्राणास्तथाप्स्वेषु भवन्ति मद्रसु ॥
भूचन्द्रयोर्धातुरक्तयाग्न्योर्यज्ञस्य तेजांसि सहस्थितानि ॥ ४ ॥
तान्येव तेजांसि पृथग् भवन्ति होतॄणि पञ्चेति हि पञ्च यज्ञाः ॥
पृथक् प्रवृत्ताः सकलैस्तु यज्ञैरेकोऽस्ति यज्ञः स मतो ममात्मा ॥ ५ ॥

ब्रह्मास्ति नाभावथ पञ्चयज्ञाः स्तोमेषु दृष्टास्तमनुप्रवृत्ताः ॥
प्राणाः परेषामपि तत्र सेदुः प्रजापतिः सर्वत्रिधोऽस्ति यज्ञः ॥ ६ ॥
[ कौ॰ ब्रा. १२ श्रा. १ कं. ]

बहोश्च भूयान् भवितुं प्रजापतिर्यज्ञात्मकोऽयं दशहोतृतामगात् ॥
आत्मानमेको दशधा व्यधादसौ तेभ्यः स देवानसुरान् ससर्ज ह ॥ ७ ॥
सत्यानृतोर्ध्वाधरदक्षसव्याभिमुख्यवैमुख्यविवृद्धिनाशाः ॥
लोकत्रयं सत्यमथानृतं दिक् स्फुटाः परद्वन्द्वगता हि भावाः ॥ ८ ॥
[ तै. ब्रा. २ का. २ प्र. १—११ अ. ]
प्राणान् विधायायतनं त्रिवृन्मयान् प्राणं जुहावात्मनि चेन्द्ररूपिणि ॥
वीर्य्ये तु वीर्य्यं स यतोऽजुहोत् ततः सहैव देवा असुराश्च जज्ञिरे ॥ ६ ॥
यः पार्थिवः प्राण इमं तमाहुस्तत्र त्रिवृत् प्राण इतीह देवाः ॥ *
सर्वेऽसुरास्तज्जनिता भवन्ति तदग्निहोत्रं दशहोतृक्लृप्तम् ॥ १० ॥

| | | | | | | |
|---|---|---|---|---|---|---|
| १ ऊर्ध्वाः प्राणाः | = | अहः | } | उदयः | | अतो देवाः |
| २ अर्वाञ्चः प्राणाः | = | रात्रिः | } | तिरोभावः | | अतोऽसुराः |
| ३ पूर्वपक्षः | = | अहः | } | आप्यायनम् | ⊙ | अतो देवाः |
| ४ कृष्णपक्षः | = | रात्रिः | } | अपक्षयः | ० | अतोऽसुराः |
| ५ दिवा | = | अहः | } | आभिमुख्यम् | ‿ | अतो देवाः |
| ६ नक्तम् | = | रात्रिः | } | वैमुख्यम् | ⁀ | अतोऽसुराः |
| ७ सत्यम् | = | अहः | } | सत्ता | | अतो देवाः |
| ८ अनृतम् | = | रात्रिः | } | नाशः | | अतोऽसुराः |
| ६ दक्षिणभागः | = | अहः | } | सहकारः | →→ | अतो देवाः |
| १० सव्यभागः | = | रात्रिः | } | तिरस्कारः | ←← | अतोऽसुराः |

देवास्तु सत्येन च दक्षभागे वलक्षपक्षे च दिवा तथोर्ध्वैः ॥
प्राणैरधःस्थैस्त्वनृतेन सव्येऽपक्षीणपक्षे निशि चासुराः स्युः ॥ ११ ॥
आप्यायिता ऊर्ध्वत एव देवाः शुक्लाश्च सत्ये किल वीर्य्यवन्तः ॥
मृद्धाश्च कृष्णा अनृते त्ववाञ्चः प्रध्वंसितास्ते ह्यसुरा भवन्ति ॥ १२ ॥
स्तोमोऽतृणत् पञ्चदशस्तु मध्ये स्तोमं तमग्र्यं त्रिवृतं ततस्तौ ॥
पूर्वापरौ चाभवतां तु पक्षौ पूर्वे तु देवा अपरेऽसुराः स्युः ॥ १३ ॥
[ तै. ब्रा. २।२।३ ]
इत्थं त्रिवृत्स्तोमगताः परेपि चतुर्विधद्वन्द्वमया विभागाः ॥
सूर्य्याग्निसंबन्धवशादभूवन् सूर्य्योग्निहोत्रं तत उच्यतेऽयम् ॥ १४ ॥
[ शत. २ कां. ३ अ. १ कं. शत. ११।३।१ ]

सर्वे च देवा असुराश्च सर्वे प्रत्येककाये निवसन्ति जुष्टाः ॥
तत्रात्मपुष्ट्यै प्रचरन्ति देवा आत्मापकृत्या असुराश्चरन्ति ॥ १५ ॥

* त्रिवृत् प्राणः पार्थिवोऽग्निः। एकविंशः प्राण आदित्यः ॥ ( तै. ब्रा. )
त्रिवृदग्निः । पञ्चदश इन्द्रः । सप्तदशः प्रजापतिः । एकविंश आदित्यः ।
हिरण्मयमहः । राजती ज्यौत्स्नी रात्रिः । आयसी कृष्णारात्रिः ॥

पञ्चैव देवाः प्रभवन्ति देहे दिशोऽग्निवायू तपनश्च सोमः ॥
सोमो मनोऽर्कोऽक्षिचवागिहाग्निः श्रोत्रं दिशः प्राण इहास्ति वायुः॥ १६ ॥
प्रेयो भवेच्छ्रेय उतात्मनो यद् दृष्टं श्रुतं चिन्तितमेवमुक्तम् ॥
तद्वैवक्लृप्तं विपरीतमेषां तत्पाप्मना विद्धमसुर्य्यमाहुः ॥ १७ ॥
अग्निस्तु रक्षोघ्न इतीव नासुरः प्राणे प्रभुः संभवतीह कर्हिचित् ॥
द्वैधं यथाऽन्यत्र तथा न दृश्यते प्राणे श्वसन् जीवति सर्वदैकधा ॥ १८ ॥
प्रजापतेरात्मन एव देवा आदित्यवाय्वग्नय उद्बभूवुः ॥
देवास्त्रयस्ते विभवन्ति विश्वं तेषां हुतात् संभवतीह सर्वम् ॥ १६ ॥
[ तै. ब्रा. २।१।६ ]

प्राणाय गात्राय च चक्षुषे चाग्निवायुसूर्य्या इह जुह्वति स्वम् ॥
अग्निर्व्यधात् प्राणकुलानि वायुर्गात्राणि चक्षूंषि रविः ससर्ज ॥ २० ॥
[ तै॰ ब्रा॰ २।१।६ ]

आत्मा मनोबुद्धिमयोऽत्र चक्षुस्तदिन्द्र आदित्य इह प्रयुङ्क्ते ॥
वागन्य आत्मा तु शरीरमेतद् वायोरथ प्राण इहाग्नितः स्यात् ॥ २१ ॥
इत्येवमेकेऽथ परेऽन्यथाहुः प्राणः शरीरेऽन्तरितोऽग्निभूः सः ॥
प्राणाश्रयो वायुवशस्तु कायो बहिस्तु कायाद्रविजन्म चक्षुः ॥ २२ ॥

प्राणाविनाभूतमिदं मनोऽपि प्राणेन तेनात्र भवेद् गृहीतम् ॥
यानीन्द्रियाण्यत्र च यानि भूतान्येतानि सर्वाणि तदग्नितः स्युः ॥ २३ ॥
स्पर्शोऽयमुष्णोऽग्निनिबन्धनोऽस्मिन् देहेऽस्ति चेत् प्राणिति तावदेषः ॥
अग्नौ प्रशान्ते तु न तत्र चेष्टा न चेतना नापि तदिन्द्रियाणि ॥ २४ ॥
अग्नौ च निर्वाणमिते शरीरे रसादिभूतान्यपि नोद्भवन्ति ॥
उद्भूतभूतान्यपि विस्रसन्ते प्रवर्तते तत्र च पूतिगन्धः ॥ २५ ॥

भूतेभ्य एभ्यस्तु शरीरक्लृप्तिराशीर्षका पादतलाङ्गसंस्था ॥
संपद्यते वायुवशेन वायोः स्तब्धं च दृब्धं च समस्तमङ्गम् ॥ २६ ॥
वायुर्द्विधा रेतसि डिम्भयुग्मं करोति वायोर्निखिलाङ्गचेष्टा ॥
वायुप्रकोपाद् विषमत्वमङ्गे स वायुरीष्टेऽत्र शरीरयष्टौ ॥ २७ ॥

अथो शरीरस्य यदस्ति रूपं तत्तच्छरीराद्बहिरेति दूरे ॥
तस्मिन् हि चक्षुर्निहितं शरीरं तद् दृश्यते चक्षुरिदं वदामः ॥ २८ ॥
सूर्य्यस्य रश्मिः प्रतिपद्य कायं प्रत्याहतो भिन्नगतिः स तिर्य्यक् ॥
प्रत्यङ्गबिन्दुप्रतिमूर्तिक्लृप्त्या चक्षुष्यपूर्वां कुरुतेऽङ्गसंस्थाम् ॥ २६ ॥

इत्थं च गौरेव हुतादमीषामभूदमीषां न हुतानि चेत् स्युः ॥ [तै. ब्रा. २।१।६]
रश्मिस्तदा न प्रतिघातमेयान्न कायतो गौर्न च वस्तुदृष्टिः ॥ ३० ॥

चक्षुष्यदो भाति शरीरमस्मिन् प्राणास्तवित्थं त्रितयं सहास्ते ॥
प्राणो न चेत्स्यान्न तनुर्न चक्षुस्तदा भवेत् तेन तदग्निहोत्रम् ॥ ३१ ॥
गौरग्निहोत्रं हि तमग्निमिद्धा प्राणादपानाश्च समर्द्धयन्ती ॥ तै. ब्रा. २।१।६
अग्नेश्च हुत्यैव समस्तमेतत् संपद्यते स प्रथमोऽस्ति यज्ञः ॥ ३२ ॥

अजायताथो दशहोतृतश्चतुर्होता स देवासुरयुग्यनन्तरम् ॥
देवासुराणामथमिन्द्र आहुतेर्देवैश्चतुर्भिर्जनितो बभूवह ॥ ३३ ॥
त्वष्टा च मित्रश्च पृथग्भवेतां द्यावापृथिव्यौ पृथगत्र देवौ ॥
चत्वार एतेऽजुहवुः समेताः सोमोऽत्र तेषां गृहपस्तदासीत् ॥ ३४ ॥
तं एक विंशायतनेन वीरं तमिन्द्रमेषामसृजत् सुराणाम् ॥
इन्द्रोऽक्षुवेंऽध्यारुरुहुश्च देवाः स्वर्गे हि वीर्य्येण तदिन्द्रियेण ॥ ३५ ॥
भूमिःप्रतिष्ठाऽग्निरयं दिशो द्यौस्त्वष्टा तु रूपं विकरोति सर्वम् ॥
मित्रश्च वीर्य्यं प्रददाति सोमे प्राणोऽयमादित्य इहस्थचन्द्रः ॥ ३६ ॥
प्रतिष्ठयैव प्रतितिष्ठतीदं छन्दोभिराच्छादनभेति दिग्भिः ॥
त्वष्ट्रा लभेताङ्गविभागसिद्धिं मित्रेण चाप्नोति बलं स यज्ञः ॥ ३७ ॥
संवत्सरं तत्र ऋतून् प्रजाः पशूनिमांश्च लोकानयमभ्यजायत ॥
इन्द्रोऽयमात्मास्य जगत्प्रशासितुस्तैर्भागधेयानि भवन्ति पञ्चभिः ॥ ३८ ॥

संवत्सरोऽग्निः स हि पञ्च होता तत्राश्विनौ द्वौ वरुणश्च रुद्रः ॥
बृहस्पतिश्चेति सहर्त्विजः स्युस्ते सप्तविंशायतनं व्यचायन् ॥ ३९ ॥
ततो बभूवुः पशवः समग्रा दूर्वादयः स्थावरजङ्गमा ये ॥
येऽप्राणिनो वा प्रभवन्ति पृथ्वीपृष्ठोपरिष्टात् पशवस्त उक्ताः ॥ ४० ॥

द्यौरन्तरिक्षं पृथिवी च सूर्यो वातश्च यज्ञः सह षड्भिरेतैः ॥
षड्ढोतृतामेष जगाम धाता तस्मादृतोः क्लृप्तिरियं प्रवृत्ता ॥ ४१ ॥

इन्द्रोऽर्यमा वा खलु सप्त होता महाहविः सत्यहविस्त्वयास्यः ॥
अचित्यपाजा उ अचित्य चित्तोऽनाधृष्य एषोऽप्रतिधृष्य एषः ॥ ४२ ॥
विधाय तत्रायतनं तं एते स्तोमं त्रयस्त्रिंशमिमां प्रतिष्ठाम् ॥
होतारमाप्यार्य्यमणं त्वहौषुः स चार्य्यमा यज्ञ इति ब्रवन्ति ॥ ४३ ॥
[ तै. ब्रा. २।३।५ ]

द्यावापृथिव्योरितरेतरेणाभूत् संततिर्यज्ञत एव तस्मात् ॥
इतो वहेद्धव्यममुत्र सद्यो दिवोऽपि वृष्टिर्भवतीह भूमौ ॥ ४४ ॥
सर्वेऽपि लोका इतरेतरेण संतानिताः सन्ति यतस्ततस्ते ॥
अन्योन्यभोगाय भवन्ति सर्वे भूमेः स्वरायान्ति दिवश्च भूमिम् ॥ ४५ ॥

---

* एकैको वैजनतायामिन्द्रः ॥ ( तै. ब्रा. १।४।६ )

| | | | | | | | | | | | |
|---|---|---|---|---|---|---|---|---|---|---|---|
| ४ | चतुर्होतारः | पृथ्वी प्रतिष्ठा | द्यौः प्रदिशः | त्वष्टा रूपाणि | मित्रः वाचिर्वार्य्यम् | ० | ० | ० | सोमः | वीर इन्द्रः | २१ |
| ५ | पञ्चहोतारः | नासत्यः | दस्रः | वरुणः | रुद्रः | बृहस्पतिः | ० | ० | अग्निः वरुणो वा | पशुमान् | २७ |
| ६ | षड्ढोतारः | द्यौः | अन्तरिक्षः | पृथ्वी | सूर्य्यः | वातः | यज्ञः | ० | धाता | ऋतुमान् | |
| ७ | सप्तहोतारः | महाहविः | सत्यहविः | अयास्यः | अचित्यपाजः | अचित्यचित्तः | अनाधृष्यः | अप्रतिधृष्यः | इन्द्रः अर्य्यमाव गृहपतिः | मिथःसर्वेषां संतननम् | ३३ |

एतानि सत्राणि निरन्तराणि भवन्ति पञ्चापि कृतानि देवैः ॥
प्रजापतिः सोम उताग्निरेवं धातार्य्यमा होतृतयैषु क्लृप्ताः ॥ ४६ ॥
मुख्यैरमीभिः सममृत्विजोऽन्ये ते पंध्रुवस्तत्र प्रजेश्वरेण ॥
चक्षुःप्रजाःसोमतओषधीश्चाग्निना पशून् धातृवशाद् ऋतूंश्च ॥ ४७ ॥
अथेन्द्रतोवार्य्यमतोऽपि लोकान् मिथःसमस्तान् समतन्वतेमान् ॥
सोमेन चेन्द्रो जनितोऽग्निना चासुरा इतस्तत्पशवश्च नुन्नाः ॥ ४८ ॥
अपीन्द्रियं पुष्यति सप्तहोता स्वर्गाय हेतुः स च पञ्चहोता ॥
सोमो यशस्तेन यशः प्रतीयाद्यज्ञं चतुर्होतृतया प्रपन्नम् ॥ ४९ ॥
[तै॰ २ । २ । ८]

यदेव किञ्चित् क्वचिदस्ति तच्चतुर्होतार एभ्योऽधि च यज्ञनिर्मितिः ॥
नैभ्यो विना सृष्टिरिहास्ति काचन प्राप्तोऽस्ति यज्ञोऽपि न तैर्विना क्वचित्॥५०॥

द्यावापृथिव्यात्मकसृष्टिरेषा यज्ञश्चतुर्होतृतयास्ति क्लृप्तः ॥
आदित्यवाय्वग्नय एष चन्द्रो होतार एतेऽत्र भवन्ति नित्याः ॥ ५१ ॥
पञ्चेह भूतानि भवन्ति तेऽन्ये होतार उक्तास्तत एष यज्ञः ॥
स्यात्पञ्चहोता षडिहर्तवः स्युर्होतार इत्थं स परोस्ति यज्ञः ॥ ५२ ॥
भूर्लोकमारभ्य तु सत्यलोकावधि प्रतीता इह सप्तलोकाः ॥
होतार एते तत एष यज्ञः स्यात् सप्तहोताऽन्वयनाय तेषाम् ॥ ५३ ॥
प्रजापतिः कश्चिदिहैष आत्मा दिग्भ्यो दशभ्यः परिक्लृप्तमूर्त्तिः ॥
आत्मानमात्मन्यमितं जुहोति यद्दोःस भूयान् भवति प्रजाभिः ॥ ५४ ॥
प्रजापतिर्यं पुरुषं ससर्ज तत्राग्निराविश्य तमत्तुमैच्छत् ॥
दहोत ने देष ततः स यज्ञानात्मस्पृतस्तानजुहोत् प्रजेशः ॥ ५५ ॥
तत्रैष आपोमय एक ऋत्विक् प्रजापतिःस्वं दशधा विधाय ॥
प्राणं जुहावैष ततः प्रकीर्णान्यङ्गानि सर्वाणि मुहुर्बभूवुः ॥ ५६ ॥
आदित्यवाय्वग्निसुधांशवस्ते स्युर्ऋत्विजश्चानु प्रजापतिं तम् ॥
होतार एते पुरुषस्य चत्वार्य्यङ्गान्युपौहन् स परोऽस्तियज्ञः ॥ ५७ ॥

पञ्चर्त्विजस्ते पशवो बभूवुस्तेऽङ्गान्युपोहन्निह लोमचर्म्म ॥
मांसास्थिमज्जश्च तथर्तवः षट् तत्रर्तुधर्म्मान् ससृजुः स्वकाले ॥ ५८ ॥
सप्तर्त्विजः प्राणमथा यतस्तेऽह्वौपुस्ततः सप्त बभूवुरस्मिन् ॥
प्राणा हि वागादय एवमन्ये सप्त त्वगाद्याः स हि सप्तहोता ॥ ५९ ॥
"सप्त ऋषयः प्रतिहिताः शरीरे सप्त रक्षन्ति सदमप्रमादम् ॥
सप्तापःस्वपतो लोकमीयुस्तत्र जागृतो अस्वप्नजौ सत्रसदौ च देवौ ॥ ६० ॥
[य. वा. सं. ३४ । ५५]

अथायमात्मा भ्रियते स यज्ञः प्रजापतिस्तिष्ठति तस्य नाभौ ॥
अन्तःप्रविष्टः स समानमास्ते शास्ता जनानां प्रतरामणीयान् ॥ ६१ ॥
सर्वाणि शुक्राणि प्रजाश्च सर्वाः सर्वे च होतार इहैकभूताः ॥
सर्वे चतुर्होतृविशिष्टयज्ञास्ते संपदं यान्ति हि तत्र देवैः ॥ ६२ ॥
प्राणास्त्रिवृत् पञ्चदशेन तृप्तः पक्षावभूतामपरश्च पूर्वः ॥
द्वन्द्वान्यभूवन्नपराणि चास्मिन् प्रजापतिस्तेन दशत्वमागात् ॥ ६३ ॥
दशाहुतीरन्वभवत् पुरस्ताद् दैवी ततः संपदिहासुरी च ॥
मोक्षाय दैवी यतते तु संपद् बन्धाय संपत् प्रभुरासुरी स्यात् ॥ ६४ ॥
यावद्बलं सा लभतेऽत्र दैवी तावत् स विद्यासु भवेन्निविष्टः ॥
यावद्बलं चालभतासुरीयं तावत् स उत्साहमुपैति धृष्टः ॥ ६५ ॥
स एष यज्ञः प्रथमः समन्ताद् ब्रह्माणमाश्रित्य भवत्यजस्रम् ॥
अथैकविंशायतने विधत्ते सोमश्चतुर्होतृविधेययज्ञम् ॥ ६६ ॥
देवासुराणामुदभूदिहेन्द्रो देवाश्च तं पर्य्यविशन् समन्तात् ॥
[तै. ब्रा. २ । २ । १०]

आदित्यरुद्रा वसवश्च विश्वेदेवाश्च साध्यांगिरसश्च दिक्षु ॥ ६७ ॥
संवत्सरं तत्र ऋतून् प्रजाः पशूनिमांश्च लोकानयमभ्यजायत ॥
इन्द्रोऽयमात्मास्य शरीरशासितुस्तैर्भागधेयानि भवन्ति पञ्चभिः ॥ ६८ ॥
शरीरसंवत्सर एष इन्द्रतो वितायते तन्मय एव जायते ॥
यान्यस्य पर्वाणि दिनैश्च रात्रिभिः पक्षैश्च मासैरयनैश्च तान्यपि ॥ ६९ ॥
याश्च प्रजा ये पशवोऽत्र ताश्च ते चन्द्रस्य तस्यात्मन एव कल्पिताः ॥
प्रजारसासृक्प्रमुखाःप्रधानतः शरीरधर्म्माः पशवस्तु लोमवत् ॥ ७० ॥
नाभिस्तु पृथ्वी भ्रियते शिरो द्यौस्तत्रान्तरिक्षं हृदयं त्रयस्ते ॥
लोकाः शरीरे त इमे तदिन्द्रस्यार्थे निजं तन्त्रमुपावहन्ति ॥ ७१ ॥
सौरोऽपि चान्द्रोप्यथ पार्थिवोपि संवत्सरोऽत्रात्मनि सज्जते सः ॥
वाग् वा मनश्चाथ रथन्तरं वा बृहच्च मातापितृवद्भवन्ति ॥ ७२ ॥
संवत्सरे ये च विकारभावाः पक्षैश्च मासैरयनैरहोभिः ॥
तैरप्यमुष्यैव भवन्ति भोगा अध्यात्ममिन्द्रस्य शरीरभर्त्तुः ॥ ७३ ॥
पुत्रादयो गोऽश्वगजादयो वाऽऽत्मनैव सम्बन्धमिहोपयन्ति ॥
ते ते च लोकाः प्रभवन्ति तस्यात्मनःशरीरं पृथिवी तु लोकः ॥ ७४ ॥

इन्द्रस्य चात्मा निहितः परस्तात् स पञ्चहोता स सुवर्णकोशः ॥
रजोवृतःसा वसुधान्यमीषां विराट् सुराणामिदमायुरेषाम् ॥ ७५ ॥
यद्वत्रतंचोऽस्मिन् क्रमतो विशन्ति सोमस्य चाग्नेश्च विपर्य्ययेण ॥
बलस्य हानिश्च बलस्य वृद्धिः पर्य्यायतस्तेन भवत्यमीषाम् ॥ ७६ ॥
ततः परस्तादिह सप्तहोता प्रवर्तते तेन शरीरनिष्ठाः ॥
प्राणास्तु देवानुपयन्ति देवा विस्रस्तमङ्गं प्रतिपूरयन्ति ॥ ७७ ॥
एकोऽयमात्मा तत इत्थमेतैरध्यूढयज्ञैः परिवर्तमानः ॥
सहैव वाचा मनसा च कृत्स्नः प्राणेन संपन्नतमो विभाति ॥ ७८ ॥

तदित्थमात्माथ शरीरमेतद् द्यावापृथिव्यावथवाऽथवान्यत् ॥
यदेव किञ्चित् परिदृश्यते तत् संपद्यते पञ्चभिरेव यज्ञैः ॥ ७६ ॥
एतैर्हि पञ्चैव भवन्ति यज्ञा येभ्यो जगच्चक्रमिदं प्रवृत्तम् ॥
देवास्तदिन्द्राः पशवोऽन्नमेषां तेषां विकारा गतयश्च तैः स्युः ॥ ८० ॥
देवाश्च ये वा पशवस्तु ये वा नेभ्योऽतिरिक्तं किमपि प्रतीमः ॥
प्राणा हि देवाः पशवस्तु वाचः प्राणाश्च वाचः सह विश्वमेतत् ॥ ८१ ॥
द्यावापृथिव्योरितरेतरेणाभूत् संततिर्यज्ञत एव तस्मात् ॥
इतोवहेद्धव्यममुत्र सद्भ्यो दिवोऽपि वृष्टिर्भवतीह भूमौ ॥ ८२ ॥
सर्वेऽपि लोका इतरेतरेण संतानिताः सन्ति यतस्ततस्ते ॥
अन्योन्यभोगाय भवन्ति सर्वे भूमेः स्वरायान्ति दिवश्च भूमिम् ॥ ८३ ॥
स तायते चाहरहस्तु यज्ञः संतिष्ठते चाहरहः स यज्ञः ॥
स स्वर्गगत्यै तमिमं च युंक्ते स्वर्गं ततः सोहरहः प्रयाति ॥ ८४ ॥

पञ्चात्मयज्ञाः प्रकृतिस्थिता ये तेभ्योऽभ्यकल्प्यन्त विधेययज्ञाः ॥
पर्वद्वयादह्नि च मासि वर्षे वर्षेऽथ पर्वत्रयतोऽथ वर्षात् ॥ ८५ ॥
आदावहोरात्रमुखप्रवर्त्यं यदग्निहोत्रं तदिहाह्निकं स्यात् ॥
तत्रैकऋत्विग् दशहोतृक्लृप्त्या प्रकल्पितं यज्ञमिमं वदन्ति ॥ ८६ ॥
स मासिकः पक्षमुखप्रवर्त्यो दर्शस्तथा यः खलु पूर्णमासः ॥
अध्वर्युरग्नीदपि नाम होता ब्रह्मेति चत्वार इहर्त्विजः स्युः ॥ ८७ ॥
ऋतुत्रयस्य प्रमुखे चतुर्भिर्मासैस्तु यज्ञोस्ति स पञ्चहोता ॥
पूर्वैश्चतुर्भिश्च सह प्रतिप्रस्थात्रा च पञ्चर्त्विज आहुरस्मिन् ॥ ८८ ॥
वर्षे प्रवर्त्योऽयनयोर्मुखेह्निः स वार्षिकः स्यात् पशुबन्धयज्ञः ॥
पूर्वैश्च मैत्रावरुणेन चास्मिन् षड्ढोतृवत् षट् पुनर्ऋत्विजः स्युः ॥ ८६ ॥
चेद् ब्राह्मणाच्छंस्यथ नेष्टृपोतच्छावाकमैत्रावरुणास्तथाग्नीत् ॥
होता च सप्तर्त्विज आचरन्ति संवत्सरादौ सहि सोमयज्ञः ॥ ६० ॥
संवत्सरोऽन्योऽवयवास्तथान्ये भवन्त्यृतुर्मास उताहरित्थम् ॥
एतेऽग्नयस्तेषु हुतादमीषां बलं क्रतूनामपि तत्समं स्यात् ॥ ६१ ॥

अन्ये तु यज्ञाः सकला अमीषां विकारभूता न ततःपृथक् स्युः ॥
एकं दशाद्वाऽथ शतं सहस्रं चाह्नां तु सोमस्य विभाजकं स्यात् ॥ ६२ ॥

यदग्निराधीयत एष यज्ञो यज्ञाङ्गभूतो न ततः पृथक् स्यात् ॥
यास्त्वग्निचित्या इह पञ्च सोऽग्निर्विधीयते पञ्चभिरेव यज्ञैः ॥ ९३ ॥

य एष आत्मास्ति शरीरनिष्ठः स मानुषो नाम ततोऽतिरिक्तः ॥
संपाद्यते यज्ञत एष आत्मा दैवस्ततो लोकगतीः स याति ॥ ९४ ॥
यज्ञेषु यावद्भवतीह वीर्य्यं तावत् स लोकेषु लभेत भोगम् ॥
प्रातश्च सायं च परत्र लोकेऽग्निहोत्रहुत् सोऽन्नमुपाददीत ॥ ९५ ॥
यजेत दर्शं यदि पूर्णमासं पक्षे स पक्षे लभतेऽन्नभोगम् ॥
चतुर्षु मासेषु चतुर्षु चातुर्मास्यं यजन् भोगमिहाश्नुते सः ॥ ९६ ॥
षड्भिः स षड्भिः पशुबन्धयाजी वर्षे स वर्षे यदि सोमयाजी ॥
शते शतेऽब्देष्वयमग्निचिद्वा अश्नाति कामं न च वा स कामम् ॥ ९७ ॥
न यज्ञकृच्चेत् तदमुष्य चात्मा स मानुषोऽमुत्र हि न स्वतन्त्रः ॥
स्यात् कर्मविद्यावशतः स उच्चावचेषु भावेषु बलाद्विकृष्टः ॥ ९८ ॥
होतार एतेषु भवन्तु सप्त वा षट् पञ्च चत्वार इमे दशैव वा ॥
सर्वे चतुर्होतृतयैव भाषिता भवन्ति तस्येन्द्रतयेन्द्रकल्पितुः ॥ ९९ ॥

## उपसंहारः ।

अमूर्तकालौ रविसृष्टिनाशौ सृष्टिस्त्वहः स्यात् प्रलयस्तु रात्रिः ॥
मूर्तौ तु कालौ भवतोऽग्निसोमावग्निस्त्वहोरात्रिरयं तु सोमः ॥ १०० ।
अपि द्विधाऽग्निः स ऋतं च सत्यं सत्यं त्वहः स्यादृतमस्ति रात्रिः ॥
* द्यावापृथिव्यौ तदहश्च रात्रिस्तत्राहरिन्द्रोऽग्निरयं तु रात्रिः ॥ १०१ ॥
स्तोमा अहान्यत्र विभक्तिरह्नां रात्रिस्ततो यज्ञ इतश्च सृष्टिः ॥
तस्मादहोरात्रकृतैव सृष्टिर्भवत्यहोरात्रमयो विधाता ॥ १०२ ॥
यज्ञा अहःस्वाह्वनाद्ध भवन्ति रात्र्यो विभागाय भवन्ति चाह्नाम् ॥
यस्माच्च यज्ञाद्भवतीह सर्वं तस्मादहोरात्रकृतैव सृष्टिः ॥ १०३ ॥
प्रजापतिर्यज्ञ इतो हि यज्ञाद्भूत् प्रजासृष्टिरिति स्म वृद्धाः ॥
तेनाप्यहोरात्रकृतैव सृष्टिः सिद्धा यतोऽहस्सु भवन्ति यज्ञाः ॥ १०४ ॥
राथन्तरी रात्रिरियत्यहर्येव् तद्धाहैतं सर्वेरथन्तरोऽग्निः ॥
बृहत्तथादित्य इहैव तेजोद्वये हुतं यज्ञ इति ब्रुवन्ति ॥ १०५ ॥
"बृहद्रथन्तराभ्यामिदमेति युक्तं यद्भूतं भविष्यच्चापि सर्वम् ॥
ताभ्यामियादग्नीनाधाय धीरो दिवैवान्यज्जुहुयान्नक्तमन्यत्" ॥ १०६ ॥

ऐ. ब्रा. २५ अ.

प्राणो हि यज्ञः पवते तु योऽयं तद्वर्तनी वाक् च मनश्च कल्प्ते ॥
वाचा च यज्ञो मनसा च वृत्तो मनस्त्वदो वागियमस्ति रूपात् ॥ १०७ ।

---

* "आग्नेयी वै रात्रिः । ऐन्द्रमहः" इति । ( तै. ब्रा. ३ । १ । २ ॥ १ । १ । ४ ॥ )

मनस्त्वहः स्यादथ वाक् तु रात्री ताभ्यां हि यज्ञोऽथ ततः प्रजास्ताः ॥
प्रजायमाना अपि यज्ञतस्ता भवन्त्यहोरात्रत एव जाताः ॥ १०८ ॥

तावद्दिवा यावदियन्ति देवा रात्रिस्तु सा यावदिमेऽसुराः स्युः ॥
देवासुराभ्यां भवतीह सर्वं तस्मादहोरात्रकृतैव सृष्टिः ॥ १०९ ॥
देवा अहःसन्त्यसुरास्तु रात्री देवासुराभ्यामिह दैववादाः ॥
यां सृष्टिमिच्छन्ति हि निर्विशेषं तामप्यहोरात्रत एव विद्यात् ॥ ११० ॥
अहर्वियद् रात्रिरियं वियत्तद् व्योमेत्यहोरात्रमिति ह्यभिन्नम् ॥
व्योमज्ञस्ततो यां प्रवदन्ति सृष्टिं तामप्यहोरात्रत एव विद्यात् ॥ १११ ॥
निमित्तमह्नो रविरस्त्यसौ सन् रात्र्यानिमित्तं तु रवेरसत्त्वम् ॥
तेनास्त्यहःसद्ध्यसती च रात्री तस्मान्न भिन्नः सदसत्प्रवादः ॥ ११२ ॥

प्राक्कर्मोदयतो हि यस्य मिथिलादेशे शरीरोदयः ।
श्रीविश्वेशदयोदयाच्च समभूत् काश्यां सुविद्योदयः ॥
राज्ञः प्रीत्युदयाद्भूजयपुरे संपत्तिभाग्योदयः ।
सिद्धस्तन्मधुसूदनात्तु विदुषोऽहोरात्रवादोदयः ॥ १ ॥
इतिवृत्तं सदसद्वा, रजो वियद्वाऽपरं तथावरणम् ।
अम्भोऽमृतमृत्यू वाऽहोरात्रो दैवसंशयौ ब्रह्म ॥
एते द्वादशवादाः शास्त्रेऽस्मिन् ब्रह्मविज्ञाने ।
श्रूयन्ते, तत्रायं वादो नवमोऽत्र संपूर्णः ॥ २ ॥

इति मधुसूदनविद्यावाचस्पतिप्रणीते ब्रह्मविज्ञानशास्त्रे द्वादशवादे
नवमोऽयमहोरात्रवादः संपूर्णः ॥ ९ ॥